M-2979

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particular Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्रांति चतुष्क | - | वेदांग | अपूर्ण | - | 3/6 | 168 | संस्कृत | कागद | 11 | 32 | | |

श्रीगणेशाय नमः॥ सच्चिदानंदमोक्षस्तु सर्वाधिष्ठानमुत्तमं॥ नत्वाष्टावक्रसूक्त
स्यदीपिका तन्यते परा॥१॥ यद्ज्ञानज्जगज्जातं यद्विज्ञानाद्विलीयते॥ तं नत्वा सच्चि
दानंदं कुर्वेध्यात्मप्रदीपिकां॥२॥ इह खलु ज्ञानविज्ञानसंपन्नः परमकारुणिको
ष्टावक्रमुनिर्मुक्तिकामनया समुपेतं कंचिच्छिष्यं शमदमाद्यधिकारस्वीकरोप
देशपूर्वकमात्मतत्वमुपदिशति॥ मुक्तिमिति॥ तातेति सानुग्रहसंबोधने हे शि

मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज

ष्य चेत्त्वं मुक्तिं सर्वानर्थनिवृत्तिपरमानंदावाप्तिरूपामिच्छसि तर्हि विषवत् यथा
विषमनर्थहेतुत्वात् त्यज्यते॥ तथा विषयान् देहादीननर्थहेतुभूतांस्त्यज तत्रा
हं ममेत्यध्यासादासक्तिं माकार्षीरित्यर्थः॥ अनेन बाह्यपदार्थानुषंगोपदेशेन
बाह्येंद्रियनिग्रहरूपदमांगीकारात्मकं साधनमुपतिष्ठं अथांतःकरणनि
ग्रहरूपशमांगीकारमुपदिशति॥ क्षमेति॥ क्षमा नाम सर्वसहनं सर्वाधि

अ०
१

क्षानत्वमात्मधर्मः आर्जवं नाम अविद्यारूपकुहकसंबंधाभावः॥ सोप्यात्म
धर्मः दयानाम निरूपाधिकं सर्वहितानुबंधित्वं सोप्यात्मधर्मः। तोषो नामात्म
सुखं तदप्यात्मस्वरूपं सत्यं नाम कालत्रयबाध्यस्वरूपं सोप्यात्मैवं विध
मात्मरूपं पीयूषवद्भज। यथा पीयूषममृतमाप्यते तद्वत् क्षमार्जवदयो
पेतं स्वस्वरूपं कालत्रयाबाध्यमात्मतत्वमाश्रयस्वेत्यर्थः। परमानंदावाप्ति हे

क्षमार्जवदयातोष सत्यं पीयूषवद्भज॥१॥

तुत्वादित्यर्थः॥१॥ ननु पांचभौतिको देहएवात्मा तथा च भूतानां तद्धर्माणां
च त्यागो न संभवितः। न ही पृथिव्यादीनां स्वभावभूतो गंधादिः कालत्रयेपि
त्यजतुं इत्यारंभ्य पृथिव्यादिरूपस्त्वं न भवसीत्याह॥ न पृथ्वीति॥ हे शिष्य
पृथिव्यप्तेजोवाय्वाकाशा तद्धर्मरूपस्त्वं न भवसि। अतस्त्वमनात्मधर्मावि
षयांस्त्यजेत्यर्थः। नन्वहं गौरः स्थूल इत्यादिप्रतीतेः पांचभौतिको देहए

वात्मेत्यत आह॥ एषामिति॥ एषां देहादीनां साक्षिणमेवात्मानं विद्धि साक्षा
त्कुरु। तथा च देहादेः साक्षी आत्मा देहादिभ्योभिन्नः यथा घटद्रष्टा घटाद्भि
न्न इत्यर्थः। नैयायिकाभिमतमात्मानं निराकरोति। चिद्रूपमिति। आत्मज्ञान
स्य फलमाह॥ मुक्तये इति॥३॥ आत्यंतिकी दुखनिवृत्तिर्मुक्तिरिति नैयायिकाः।

न पृथ्वी न जलं नाग्निर्न वायुर्द्यौर्न वा भवान्॥ एषां साक्षिण
मात्मानं चिद्रूपं विद्धि मुक्तये॥३॥ यदि देहं पृथक्कृत्य चिति
विश्राम्य तिष्ठसि॥ अधुनैव सुखी शांतो बंधमुक्तो भविष्यसि ४

दुखप्रागभावपरिपालनं मुक्तिरिति प्राभाकराः। आत्महानं मुक्तिरिति बौधाः।
इत्यादिमतानि निराकुर्वन्नेवात्मज्ञानाज्जीवन्मुक्तिदशामाह॥ यदीति॥ हे शि
ष्य यदि त्वं देहं पृथक्कृत्य देहादिभ्यो विलक्षणं आत्मानं विविच्य चिति वि
श्रम्य चिदेकाग्रो भूत्वा तिष्ठसि। तर्हि त्वं अधुनैव इदानीं जीवद्दशायामेव सुखी

अ० 

प्राप्तपरमानंदः। अत एव शांतः सुप्रसन्नमनाः बंधमुक्तः। कर्तृत्वभोक्तृत्वप्रमुखानर्थरहितो भविष्यसीत्यर्थः। ननु वर्णाश्रमप्रयुक्तानि कर्माणि विहाय चित्तविश्रम्यावस्थानं कथं मुक्तिरित्याशंक्यात्मा वर्णाश्रमविलक्षण इत्याह॥ न त्वमिति॥ त्वं वर्णाश्रमविलक्षण इत्यर्थः। नन्वहं ब्राह्मण इत्यादिचाक्षुषप्रत्यक्षबलादात्मैव वर्णाश्रमी चेत्याशंक्याह। नाक्षगोचर इति

न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः
असंगोसि निराकारो विश्वसाक्षी सुखी भव ५

साक्षित्वादित्यर्थः। अहं ब्राह्मण इत्यादिप्रत्ययास्तु देहगोचरा एवं न त्वात्मगोचरास्तस्येंद्रियज्ञानागोचरत्वादित्यर्थः। तर्हि कीदृशोहमित्याशंक्यात्मानं निरूपयन्नेव तद्विश्रांतिफलमनुवदति असंगः सर्वोपाधिसंगरहितः निराकारः विश्वसाक्षी त्वमसि अतश्चासंगादिरूपस्यतव वर्णाश्रमविलक्षणस्य कर्मासक्तिपरिहाराय चित्तविश्रम्य सुखी परमानंदो भवेत्यर्थः ५ श्री श्री

२

ननु वेदोदितं कर्म विहाय चित्तविश्रांतामिति प्रत्यवायशंकेयत आह॥ धर्मा
धर्मावितिं॥ धर्माधर्मादयो मनस एव कालत्रयेपि तैः सह तव संबंधो नास्ती
त्यर्थः। न कर्त्तेति। किंच विहितनिषिद्धकर्म कर्तृ धर्मादि द्वारा सुखदुःख

धर्माधर्मौ सुखं दुःखं मानसानि न ते विभो॥
न कर्त्तासि न भोक्तासि मुक्त एवासि सर्वदा॥५

भोक्तृत्वं तदपि तव नास्ति शुद्धबुद्धस्वरूपत्वात्त्वं सर्वदा मुक्त एव। अज्ञानमात्रवि
जृंभिते बंधदुःखे तु चित्तविश्रांत्यैवाज्ञाननिरसनविजृंभिष्यते त्यर्थः॥५॥

ननु शुद्धस्वभावस्यैकस्य नित्यमुक्तस्यात्मनो बंधः किंनिबंधनो यस्य बंध
स्य निवृत्त्यर्थं विवेकिनो यतंत इत्याशंक्य नित्यमुक्तस्यापि भ्रांतीत्तिकं बं
धहेतुमाह॥ एक इति॥ हे शिष्य सर्वस्य द्रष्टा प्रतिशरीरमेकस्त्वमसि तत
श्च व्यापकत्वात्सर्वदा मुक्तश्चायोसि देहाध्यावज्ञानबंधे वर्तीयमानेपि

एको द्रष्टासि सर्वस्य मुक्तप्रा
योसि सर्वदा॥ अयमेव हि ते बं
धो द्रष्टारं पश्यसीतरं॥६॥

वस्तुगत्यामुक्तोसीत्यर्थः। अयमिति। हि निश्चितं। अयमेव बंधो यदितरं
देहादिरूपं परिछिन्नं द्रष्टारं पश्यतीत्यर्थः॥६॥ रामकृष्ण रामकृष्णाजी

पूर्वं बंधहेतुरुक्तः। अर्थानर्थहेतुं वदन्नेव तन्निवृत्ति परमानंदावाप्त्यो
रुपायमनुवदति॥ अहं कर्त्तेति॥ अहं कर्त्तेत्येवंरूपो योहंमानः अहमिति।
आत्मनि कर्तृत्वाभिमानस्तद्रूपो महान्कृष्णः सर्पः संसारसुखदुःख

अहं कर्त्तेत्यहंमानमहाकृष्णाहिदंशितः॥
नाहं कर्त्तेति विश्वासामृतं पीत्वा सुखी भव॥८॥

विषावहत्वेन दंशितः कवलीकृतोऽतः करणान्न कर्त्ता अहं अकर्त्ता आत्माइ
त्येवंरूपविश्वासामृतं निश्चयामृतं पीत्वा मृत्युसुखी भव प्राप्तपरमानंदो भ
वेत्यर्थः ७

अ०

नन्वात्मज्ञानामृतपानं किं द्वारा सुखसाधनमित्याशंक्य अज्ञानकानन
दहनद्वाराज्ञानाग्निः सुखसाधनमित्याह॥ एको विशुद्धबुद्धमिति॥ एकः
सजातीयविजातीयस्वगतभेदरहितः विशुद्धबुद्धः प्रकाशः चिदात्माह

ख

एको विशुद्धबुद्धोहमिति निश्चयवन्हिना॥
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखी भव ८

मिति निश्चयाग्निना अज्ञानाख्यं गहनं प्रज्वाल्य प्रकर्षेण दग्ध्वा मोहरागद्वेष
प्रवृत्तिजन्मापायाद्वीतशोकः विगतदुःखः सन्सुखी भवेत्यर्थः॥ ८॥ राम॥

ननु ज्ञानेन अज्ञानदाहे सत्यमपि सत्यस्य प्रपंचस्य ज्ञानादनिवृत्तेर्वीत
शोकः कथं स्यादित्याशंक्याप्रपंचस्य रज्जुभुजंगतुल्यत्वात् ज्ञानाद्विनिवृत्तौ
दुःखहेतोरभावाद्वीतशोकता स्यादेवेत्याह॥ यत्रेति॥ यत्र बोधे इदं विश्वं र
ज्जुसर्पवत् कल्पितं अधिष्ठानाज्ञानकल्पितं भाति सर्वोऽच्छिदात्मा त्वं
सुखं चर यथा स्वप्नदशायामज्ञानकल्पितं व्याघ्रादिकं जाग्रद्बोधे विनिव

यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत्॥
आनंदपरमानंदः स बोधस्त्वं सुखं चर॥१॥

र्त्ते सुखं चरति तद्वदित्यर्थः॥ ननु दुःखहेतुप्रपंचनिवृत्तौ दुःखस्याभावमात्रं स्या
त् सुखं तु कथं स्यादित्याशंक्य स्वभावत एव त्वं नित्यानंतानंदस्वरूप इत्या
ह॥ आनंदेति॥ आनंदेभ्यो मनुष्यलोकदेवलोकानां आनंदेभ्यः परम उ
त्कृष्ट आनंदस्त्वमित्यर्थः॥ एतस्यैवानंदस्यान्यानि भूतानि मात्रमुपजीवंतीतिश्रुतेः१

अ०

ननु सर्वं रज्जुसर्पवत्कल्पितं स्वभावस्त्वानंद एवात्मेति चेत्तर्हि बंधमोक्षा
वात्मनः किंनिबंधनौ विसाशंक्याह मुक्ताभिमानं नाहि निश्चितं मुक्ता
भिमान्येव मुक्तः अपि च बद्धाभिमानी बद्धः अत्र किंवदंती प्रमाणयति किं
वदंतीति यामतिः सा गतिर्भवेत् इयं क्रियाह प्रसिद्धा किंवदंती विद्वज्ज
नश्रुतिः सत्या अबाधितार्थी तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च

मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि॥
किंवदंतीह सत्येयं या मतिः सा मतिर्भवेत्॥१०

ति श्रुतिपरिगृहीतत्वात्। यं यं वापि स्मरन्भावमित्यादिस्मृतिपरि
गृहीतत्वाच्च॥ तथा चाभिमानिकावेव बंधमोक्षौ न तु वास्तवावित्यर्थः
पूर्वमुक्तो व्ययमर्थो दुर्बोधत्वात्पुनः पुनः शिष्यबोधार्थमुच्यते इत्य
दोषः॥१०॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥ राम॥

ननु जीवात्मनः परमार्थिकावेव बंधमोक्षाविति तार्किकाशंकामपाकर्तुं
माह॥ आत्मेति॥ आत्माभ्रमात् देहाद्यात्मा तादात्म्यभ्रमात्संसारवानि
व प्रतीयते न तु वस्तुतः संसारी। अत्र दृशाहेतुनाह। साक्षीति। कर्तुरहं
कारादेः साक्षी न तु कर्त्ता विभुः विविधं भवत्यस्मादिति विभुः सर्वाधिष्ठा
नं पूर्णः व्यापकः एकः सजातीयविजातीयस्वगतभेदरहितः मुक्तः वस्तु

आत्मा साक्षी विभुः पूर्णाको मुक्तश्चिदक्रियः॥ अ
संगो निःस्पृहः शांतो भ्रमात्संसारवानिव॥ ११॥

गत्या मायातत्कार्यातीतः चित्स्वप्रकाशचैतन्यरूपः अक्रियाश्चेष्टार
हितः असंगः सर्वसंबंधशून्यः। असंगो ह्ययं पुरुष इति श्रुतेः निस्पृहः
विषयाभिलाषरहितः शांतः प्रवृत्तिनिवृत्तिदेहाद्यहंतः करणधर्मर
हितस्तमाद्वस्तुतो न संसारीत्यर्थः॥ ११॥ श्रीरामजयराम जयजयराम॥

अहंपरिछिन्नोममेदंदेहादिकंसुखीदुःखीचाहमितिभ्रमस्यानादिप
रंपरागतस्यसकृद्भावनयानिवर्त्तयितुमशक्यत्वादावृत्तिरसकृदु
पदिशन्तिव्याससूत्रात्तुपुनःपुनरद्वैतात्मभावनांविजातीयभावना
निवृत्तिपुरःसरामुपदिशन्ति॥कूटस्थमिति।हेशिष्य आभासोहंअहं

कूटस्थबोधमद्वैतमात्मानंपरिभावय॥
आभासोहंभ्रमंमुक्त्वाभावंबाह्यमथांतरं॥१२

कारोहमितिभ्रमंमुक्त्वाबाह्यभावंमदंदेहादिकमिति बाह्यपदार्थविषयं
भावंअथचांतरभावंसुखीदुःखीमूढोहमितिआंतरपदार्थविषयंभा
वंभावनांमुक्त्वाअकृत्वाकूटस्थमसंगंबोधस्वरूपमद्वैतमात्मानं
परिसमंतात्व्यापकंभावयेत्यर्थः॥१२॥श्रीरामनार्येरणवासुदेव

अनादिरयं देहाभिमानः सकृद्भावनया वा ननिवर्त्तत इति पुनःपुनर्ज्ञी
नखड्गेन तंनिकृत्य सुखीभवेत्याह॥ देहाभिमानेति॥ हे पुत्रक शिष्य त्व
देहअहमित्यभिमानपाशेन चिरं बहुकल्पं बद्धोसि अतो बोधोहं
चिद्रूपोहमिति ज्ञानखड्गेन तं पाशं निकृत्य नितरां छित्वा सुखीभव॥१२

देहाभिमानपाशेन चिरं बद्धोसि पुत्रक॥ बोधोयंज्ञानख
ड्गेन तन्निकृत्य सुखीभव॥१३॥ निःसंगो निःक्रियोसि त्वं स्वप्र
काशो निरंजनः॥ अयमेव हि ते बंधः समाधिमनुतिष्ठसि १४

चित्तवृत्तिनिरोधरूपः समाधिरेव केवलो बंधनिवृत्तिहेतुरिति पातं
जलमतमपाकर्तुमाह॥ निःसंग इति हे शिष्य त्वं वस्तुतो निःसंगः सर्व
बंधशून्योसि॥ तथाक्रियारहितोसि। अत्रहेतुमाह। स्वप्रकाशो निरंजन
इति निःक्रियस्य समाध्यनुष्ठानं यत् अयमेव हि निश्चितं ते बंधः॥ तथा
चज्ञानातिरिक्तो योनुष्ठानक्रमः स प्रत्युत बंधाएवेत्यर्थः॥१४॥ श्रीराम॥

२०

विषयान्विषवत्त्यज सत्यं पीयूषवद्भज तेति मोक्षोपायाः प्रथमश्लोके उ
पदिष्टः परंतु विषयाणां विषतुल्यत्वे सत्यात्मनः पीयूषतुल्यत्वे च हेतुर्व
दन्नेषोडशश्लोकोपदेशो मोक्षहेतुश्चिदात्मा स्वाध्यस्तो विश्वसमततोव्या
प्य स्थितो मुकुर इव स्वाध्यस्त शरीरं इति न भावापत्तिरेव परमपुरुषा
र्थ इत्युपपत्तिमुखेन प्रकरणार्थं संगृह्णाति श्लोकत्रयेण। अथ संग्रह

संग्रहश्लोकाः॥ साकारमनृतं विद्धि निराकारं तु नि
श्चलं॥ एतत्तत्त्वोपदेशेन न पुनर्भवसंभवः॥ १॥

श्लोकाः इत्यादीनाहे शिष्य साकारं शरीरादिकं अनृतं मिथ्याभूतं विद्धि
अतस्तद्वत्त्यजेत्यर्थः। निराकारमात्मतत्त्वं निश्चलं कालत्रयावस्था
पि विद्धि। सर्वसाक्षित्वान्नित्यं विज्ञानमानंदं ब्रह्मेति श्रुतेः। अतए
तत्त्वेन चिन्मात्रोपदेशेन उपदिश्यमाने न तत्रैव विश्रम्यावस्थानेन
पुनर्नभवस्य मोक्षस्य संभवः सिद्धिरित्यर्थः॥ १॥ श्रीकृष्णदामोदरदीनबंधुः

६

अथ वर्णाश्रमधर्मकस्थूलशरीरात्पुण्यापुण्यधर्मकलिंगशरीराद्विलक्षणं परिपूर्णचैतन्यं सदृष्टांतेन निरूपयति। यथैवेति। यथैवादर्शप्रतिबिंबिते शरीरादौ अंतर्मध्ये परितो बहिश्च स आदर्शो व्याप्य वर्त्तते। त

यथैवादर्शमध्यस्थे रूपेंतः परतस्तु सः॥ त
थैवास्मिन्शरीरेंतः परितः परमेश्वरः॥ २॥

थैव स्वाध्यस्तेऽस्मिन्स्थूलशरीरे अंतः परितश्च परमेश्वरश्चिदात्मा व्याप्य स्थितः। तथा च यज्ञविश्वमिदं भाति कल्पितं रज्जुसर्पवदित्यादि सार्वी पिप्रकरणार्थः संक्षेपतः सूचितः॥ १॥ श्रीरामजयरामजयजयराम

अदर्शदृष्टांते परिछिन्नत्वादिप्रमापतिः स्वाध्यस्तशरीरांतरवर्तित्वं
च नष्टं स्यमतो घटाकाशदृष्टांतेन बाह्याभ्यंतरव्यापकत्वमाह ॥ एक
सर्वगतमिति ॥ यथा सर्वगतमेकं नित्यं व्योम घटादौ बहिरंतश्च वर्त्त
ते तथा नित्यं अविनाशि ब्रह्मभूतगणे बहिरंतश्च निरंतरं सर्वदा वर्त्त

॥ एकं सर्वगतं व्योम बहिरंतर्यथा घटे ॥ नि
त्यं निरंतरं ब्रह्म भूतगणे सर्वतथा ॥ १ ॥

तइत्यर्थः ॥ एषत्त आत्मा सर्वस्यांतर इति श्रुतेः । अतश्च बोधोहं ज्ञानख
ड्गेन देहाहंभावपाशं निकृत्य सुखी भवेत्यर्थः ॥ इति श्रीमद्विश्वेश्वररचिता
मामष्टावक्रटीकायां आत्मानुभवोपदेशप्रकरणं ॥ १ ॥ श्रीराम राम राम

इत्थं गुरूक्तिपीयूषास्वादानुभवमात्मनः आविष्कार आश्चर्यं शिष्यो
निजगुरुं प्रति। तत्रतावच्छिष्यश्चिद्रूपात्मानुभवमाविष्कुर्वन्नेव गुरुकृतोप
कारख्यापनाय प्राचीनसंस्कारवशात् बाधितावस्थाप्रतीतस्य मोहवि
डंबनस्य स्मरणमाविष्करोति॥ अहो इति॥ अदृष्टस्यानुभवादहो इत्या
श्चर्यं अहं निरंजनः सर्वोपाधिविनिर्मुक्तः शांतः सर्वविकारातीतः प्रकृतेः

इत्युपदेशः॥ अहो निरंजनः शांतो बोधोहं प्रकृतेः प
रः॥ एतावंतमहं कालं मोहेनैव विडंबितः॥२॥ ॥

परो मायांधकारस्पर्शशून्यो बोधस्वप्रकाशचिद्रूप इत्यर्थः॥ गुरूप
पकारख्यापनाय मोहविडंबनमनुस्मरति॥ एतावंतमिति॥ एतावंतं
गुरूपदेशावधिकं कालं मोहदेहात्मविवेकेन विडंबित एव सांप्रतं
तु श्रीगुरुप्रसादादात्मानंदादात्मानुभवोस्मीति विवक्षितार्थः॥२॥

पूर्वकालीनं मोहविडंबनमुक्तं से प्रतिगुरुप्रसादात्ममदेहात्ममविवे
कोस्तीति सोपपत्तिकमाह॥ यथेति॥ अहं यथा जगत्प्रकाशयामि तथैव
एवं स्थूलदेहं प्रकाशयामि॥ तथा च देहोनात्मा प्रकाशत्वाज्जगत्तद्व
दित्यर्थः। कस्तर्हि जगदादि देहात्मनोः संबंध इत्याशंक्य युक्तिविचारा
दाध्यासिकः संबंधः परमार्थगत्या च न कश्चित्संबंधः। यथास्मु वर्णि

यथा प्रकाशयाम्येको देहमेनं तथा जगत्॥
अतो मम जगत्सर्वमथवा च न किंचन॥ २॥

कुंडलादेरित्याह। अतो ममेति। अतो दृश्यत्वात्सर्वं देहप्रमुखं जगत्॥
मम मदीयं मय्याध्यस्तमित्यर्थः॥ वीवधारणे॥ अथवा परमार्थविचा
रे किंकिंचनाक्ष्मपि देहादिकं मम न च नैव मय्याध्यस्तमित्यर्थः। तदे
वमध्यारोपापवादाभ्यां प्रकृतेः परोबाधोहमित्येवात्र स्फुटीकृतं॥ २॥

ननुलिंगदेहात्कारणदेहाच्चविवेकाभावे कथंश्रकृत्यतिरिक्तात्मबोध
इत्याशंक्यततोपिविवेकजमात्मानुभवमाह॥सशरीरंइति॥अहोइ
त्याश्चर्येशरीरंलिंगशरीरसहितंविश्वंपरित्यज्यविचारितःपृथकृत

शरीरमहोविश्वंपरित्यज्यमयाधुना॥कु
तश्चित्कौशलादेवपरमात्माविलोक्यते२

तयानिषिध्यकुतश्चित्शास्त्राचार्योपदेशलक्षणात्कौशलान्चातुर्या
देवपरमःश्रेष्ठःआत्मामयाविलोक्यते।नान्यःपरमात्मविलोकनो
पायःइत्यर्थः॥२॥श्रीरामनारायणवासुदेवश्रीकृष्णदामोदरदीनबंधू

सच्छरीरविश्वस्यपृथक्त्तया परित्यजनं सदृष्टांतं निरूपयति॥ यथानतो
यत इति॥ यथा तरंगाफेनबुद्बुदाश्च न तोयतो भिन्नास्तदुपादानत्वात् त
था आत्मविनिर्गतं आत्मनः संजातं आत्मोपादानकं विश्वं आत्मनो भि
न्नं एवं च तोयतरंगादिषु जलं यथा स्वच्छमनुगतं तथा स्वच्छचिद्रूपोहं
विश्वास्मिन्नधिष्ठानभूतो न मत्तोन्यद्विश्वमित्यर्थः॥४॥ सदृष्टांतांतरेण

यथा न तोयतो भिन्नास्तरंगाफेनबुद्बुदाः आत्मनो न तथा भि
न्नं विश्वमात्मविनिर्गतं॥४॥ तंतुमात्रे भवेदेव पटो यद्वद्वि
चारितः॥ आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितं॥५॥

त्मरूपतया सर्वावलोकनं निरूपयति॥ तंतुमात्रेति॥ स्थूलदृष्ट्यातं
तु वैलक्षण्येन प्रतीयमानोपि पटो विचारितः विचारवीक्षितः सन्त
द्वत् यथा तंतुमात्रो भवेत्। अस्ति तद्वत् तथा इदं स्थूलदृष्ट्या ब्रह्म
वैलक्षण्येनापि प्रतीयमानं युक्त्या विचारितं सत् आत्मतन्मात्रमेव आ
त्मसत्तामात्रात्मकमेव तेन तंतुस्वसत्तया पटानुगतस्तथात्मापि स्वस
त्तयाधिष्ठानभूतो विश्वस्मिन्ननुगत इत्यर्थः॥५॥

आत्मनैव सर्वं व्याप्तमित्यत्र दृष्टांतांतरमाह यथेति। यथैवेक्षुरसे क्लृप्ता अध्यस्ता शर्करा तेन मधुररसेन व्याप्तैव सर्वापि व्याप्ता। तथैव मयि नित्यानंदस्वरूपे क्लृप्तम ध्यस्तं विश्वं मया नित्यानंदेन निरंतरं बाह्याभ्यंतरं

यथैवेक्षुरसे क्लृप्ता तेन व्याप्तैव शर्करा॥ तथा
विश्वं मयि क्लृप्तं मया व्याप्तं निरंतरं॥ ६॥ ०॥

व्याप्तं तस्माद्विश्वमानंदात्मस्वरूपमेवेत्यर्थः॥ तदेवमस्ति भाति प्रियमित्येवं रूपेणाहमेव सर्वत्रावस्थित इति श्लोकत्रयविवक्षितोऽर्थः॥ ६॥ राम

विश्वंचेदात्मनोनभिन्नं तर्हि किंन कारणेनेदं भासते इत्याशंक्याह। आत्म
ज्ञानादिति। आत्मनः अज्ञानात् जगत् भाति तथात्मनः। अधिष्ठानस्य
ज्ञानान्नभासते। अधिष्ठानाज्ञानादन्यस्यभानेधिष्ठानज्ञानात्त्वभा

आत्मज्ञानाज्जगद्भाति आत्मज्ञानान्नभासते
रज्ज्वज्ञानानहिर्भाति तज्ज्ञानाद्भासते नहि॥ ७॥

नेलोकप्रसिद्धं दृष्टांतमाह। रज्ज्वज्ञानादिति हि यथा रज्जुस्वरूपस्याज्ञा
नात् अहिः सर्प्पोभाति न तज्ज्ञानाद्रज्जुज्ञानान्नभासते॥ ७॥ श्रीराम।

ननु आत्मनः अज्ञाने सति आत्मप्रकाशाभावाज्जगत्कथं नाम भासत
इत्याशंक्य स्वरूपचैतन्यबलादेवेत्याह॥ १॥ प्रकाश इति॥ प्रकाशो नित्य
बोधः मे मम निजं स्वाभाविकं स्वरूपं॥ अहं ततः प्रकाशात् अतिरिक्तः भि
न्नो नास्ति अतो मम यदा विश्वं प्रकाशते तदा अहं भासः मदात्मप्रका

प्रकाशो मे निजं रूपं नातिरिक्तोस्म्यहं ततः॥
यदा प्रकाशते विश्वं तदाहं भास एव हि॥ ८॥

शादेव भासते स्वरूपचैतन्यं चेद्भासकं तदा कथमज्ञानमिति चेन्नैवं
नहि स्वरूपचैतन्यमज्ञानविरोधि किं त्वज्ञानसाधकमेव अन्यथा जड
स्य सिद्धिरेव न स्यात्॥ किं चात्मस्वरूपप्रकाशाभावे स्वात्मवोप्यसत्वप्र
सक्तिर्जगदांध्यप्रसंगश्च तस्माद्यदा विश्वं प्रकाशते तदात्मस्वरूपप्रका
शादेवेति भावः ८

स्वप्रकाशोपि मयि अज्ञानवशाद्विश्वं भासत इति मदोहं श्चर्यं स दृष्टांतमाह। अहो इति। स्वप्रकाशोपि मयि अज्ञानाद्विकल्पितेरचितमध्यस्तं विश्वं मयि भासते॥ अहो आश्चर्यमिदं यथा शुक्त्यादौ रूप्यादिकं भासते तद्वदित्यर्थः॥९॥ ननु मायाविकारित्वात्तत्रैव विश्वमुत्पद्यते तत्रैव विल

अहो विकल्पितं विश्वमज्ञानान्मयि भासते॥ रूप्यं शुक्तौ फणी रज्जौ वारि सूर्यकरे यथा॥९॥ मत्तो विनिर्गतं विश्वं मय्येव लयमेष्यति॥ मृदि कुंभो जले वीचिः कनके कटकं यथा॥१०॥

यमेति। ननु चैतन्यात्मनीति सांख्यामतमपाकर्तुमाह॥ मत्तो विनिर्गमितेति॥ इदं विश्वं मत्तास्वविनिर्गतं मय्येव लयमेष्यति प्राप्स्यति॥ यथा मृदादौ कुंभादिस्तद्वदित्यर्थः। न चात्र प्रामाणाभाव इति शंकनीयं। यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंतीति श्रुतेः॥१०

ननु ब्रह्मचेज्जगदुपादानं कारणं। तर्हि तस्य विकारित्वान्मृदादिद्विवे
नाशित्वापत्तिरित्याशंक्याह। अहो अहमिति। अहो आश्चर्यरूपोहं। य
स्य मम सर्वोपादानस्य तस्यापि विनाशो नास्ति। न चोपादानत्वे सुवर्णा
दिवद्विनाशित्वापत्तिः सुवर्णादिवद्विकारित्वानंगीकारात् विवर्त्ताधिष्ठा

अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे॥
ब्रह्मादिस्तंबपर्यंतं जगन्नाशोपि तिष्ठतः ११॥

नत्वेनैवोपादानत्वस्वीकारात्। अत एवाशेषकार्योपादानत्वादविना
शिने सर्वोत्कृष्टमह्यं नमः। ब्रह्मादिदेवतावत्प्रलये विनाशशंकां नि
राकरोति। ब्रह्मादिरिति॥ ब्रह्मादिस्तंबपर्यंतं यद्वजगत् तस्य नाशो
पि तिष्ठतुः। प्रलयेपि स्थितिमस्मतो यस्य मे नाशो नास्तीत्यर्थः। सत्यं
ज्ञानमनंतं ब्रह्मेति श्रुतिः ११

अ० नन्वात्मा सुखदुःखाव छेदक देहत्वान्नानातथाहंकाररूपत्वान्नदेशागमनागमनदेशवानित्याशंक्याह॥ अहो अहमिति॥ अहो आश्चर्यरूपोहं आश्चर्यरूपायमह्यं नमः। आश्चर्यमेरूपत्वमेवाह॥ एकोहमिति॥

अहो अहं नमो मह्यमेको हं देहवानपि॥ क्व
चिन्नगंतानागंताव्याप्यविश्वमवस्थितः १२

नानासुखदुःखावछेदकदेहवानप्यहमेक एव यथा नानासकंपनिष्कंपत्वावछेदक जलोपाधिमानपि भानुरेक एवेत्यर्थः। क्वचिदिति। विश्वंव्याप्यअवस्थितः। परिछिन्नाहंकारविलक्षणोहं क्वचिदपि नगंतानागंतावेत्यर्थः १२

नन्वात्मा न निःसंगः शरीरसंसर्गितया जगद्विधारकत्वादित्याशंक्या
ह। अहो अहमिति। प्रथमपादार्थः पूर्ववत्। इति कारणान्मत्तस्य मो दक्षः
असंभाव्यकार्यविधानेन चतुरः कोपि नास्ति येन हेतुना शरीरेण असंस्प
श्य घटपिंडेनोल्मुकवदसंबध्यैव चिरं बहुकालं विश्वस्थावरजंगम

अहो अहं नमो मह्यं दक्षो नास्तीह मत्समः॥ असंस्पृश्य
शरीरेण येन विश्वं चिरं धृतं॥१३॥ अहो अहं नमो मह्यं य
स्य मे नास्ति किंचन॥ अथवा यस्य मे सर्वं यद्वाङ्मनसगोचरं १४

मया धृतं। १३। नन्वसंबधस्य न जगद्विधारकत्वं संबधस्यैवमित्यादि
धारकत्वादित्याशंक्याह। अहो अहमिति अहो आश्चर्यरूपोहं तस्मै मे
नमः॥ यस्य मे संबधि परमार्थगत्या किंचन किमपि नास्ति। परमार्थ
सत्ताद्वितीयस्य वा ना वा तत् यावत् वाङ्मनसगोचरं तावत्सर्वं यस्य मेम
मसंबधि मिथ्यातादात्म्यसंबंधः सुवर्णकुंडलादिवदित्यर्थः॥ अनए
वसर्वसंबधित्वासर्वसंबधित्वाभ्यामाश्चर्यरूपाय मह्यं नम इत्यर्थः १४

ननु त्रिपुटीरूपसंसारस्य पारमार्थिकत्वात्कथं मिथ्यातादात्म्यसंबंधो जगदात्मनोरित्याशंक्याह॥ ज्ञानं ज्ञेयमिति॥ ज्ञानं ज्ञेयं तथा ज्ञाता इत्यादिकं त्रितयं त्रिपुटीरूपं सर्वं वास्तवं पारमार्थिकं नास्ति। यत्र मयि इदं त्रितयं

ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवं॥
अज्ञानाद्भाति यत्रेदं सोहमस्मि निरंजनं॥१५

अज्ञानादनिर्वचनीयाज्ञानान्मिथ्यातादात्म्येनाध्यस्तं भाति अत एव वस्तुगत्याहं निरंजनः प्रपंचमलसंबंधशून्योस्मीत्यर्थः १५ श्रीरामजयराम

ननु निरंजनस्य कथं दुःखसंबध इत्याशंक्य द्वैतभ्रांतिमूलक एवासौ न तु वास्त
व इत्याह। द्वैतमूलमिति अहो आश्चर्यं निरंजनस्याप्यात्मनः द्वैतमूलं दुःखं
द्वैतभ्रमो ध्या दुःखाध्यासो न तु वास्तवं दुःखमित्यर्थः दुःखाध्यासमहाव्या
धेः किं भेषजमित्याशंक्याह॥ नान्यदिति॥ अमलो मायातत्कार्यातीतश्चि

द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजं॥
दृश्यमेतन्मृषा सर्वमेकोहं चिद्रसोमलः १६

न्मात्रस्वरूप एको हा एतत्प्रतीयमानं सर्वं दृश्यं जडजातं मृषा मिथ्याभूतम
पारमार्थिकमिति॥ बोधादन्यत्तस्य त्रिविधदुःखव्याधेर्भेषजं नास्तीत्यर्थः १६

३०

ननु यं द्वैतप्रपंचाध्यासः किंनिमित्तः किमुपादानक इत्याशंक्याह । बोधे
ति । बोधमात्रश्चिदेकस्वरूपोहमेव पारमार्थिकः । मयाऽसर्वोपादानभूतेनक
र्त्राऽज्ञानादखंडाज्ञानरूपनिमित्तादहंकारप्रमुख उपाधिर्द्वैतप्रपंचः क

बोधमात्रोहमज्ञानादुपाधिः कल्पितो मया ॥
एवं विमृश्यतो नित्यनिर्विकल्पे मतिर्मम १७

ल्पितः । एवं विचारस्य फलमाह । एवं इति । एवं नित्यं विमृशतो विचारयतो
मम निर्विकल्पे निरस्तद्वैते स्वरूपचैतन्ये स्थितिः प्राप्तिर्जाता ॥१७॥

१६

ननु स्वरूपचैतन्यप्राप्तिरूपा मुक्तिः। प्रागुक्तविचारजन्या चेत्तदा मुक्तेर्वि
नाशापत्तिः जन्यभावस्य विनाशित्वनियमात् विचाराजन्या चेत्तदा विचा
ररहितानामपि मोक्षापत्तिरित्याशंक्याह। अहो इति। वस्तुतो मे मम बंधो
नास्ति न च मोक्षोप्यस्ति नित्यं चिद्रूपत्वात्। तर्हि शास्त्रविचारस्य किं फलमि

अहो मयि स्थितं विश्वं वस्तुतो मयि न स्थितं॥
न मे बंधोस्ति मोक्षो वा भ्रांतिः शांता निराश्रया॥१८

त्याशंक्याभ्रांतिनिवृत्तिरेव तत्फलमित्याह। अहो मयीति। अहो आश्चर्यं
मयि स्थितमपि विश्वं वस्तुतः कालत्रयेपि मयि न स्थितमिति विचारतो
भ्रांतिरिव शांता ननु परमानंदावाप्तिर्जनिता आत्मनः सर्वदा परमानंद
रूपत्वात् कीदृशी भ्रांतिर्निराश्रया। उक्तविचारादज्ञानस्य नष्टत्वान्निर्मूलेत्यर्थः १८

नन्वधिष्ठानस्योपादानस्य सत्वात् मुक्तेष्वपि प्रपंचोदयः स्यादित्याशंक्याह
सच्छरीरमिति। शरीरसहितमिदं विश्वं न किंचित् न सत्यं नाप्यसत्यमि
ति। निश्चितं नेहनानास्ति किंचनेति श्रुतेः। आत्मा चिन्मात्रः शुद्धः माया

सच्छरीरमिदं विश्वं न किंचिदिति निश्चितं। शु
द्धचिन्मात्र आत्मा च तत्कस्मिन्कल्पनाधुना ११

मलशून्यः ततस्मात्कारणादधुना अज्ञाननिवृत्तौ सत्यां। कस्मिन् अधि
ष्ठाने विश्वकल्पना स्यात् न कस्मिन्नपीत्यर्थः॥ ११॥ रामरामरामरामराम

ननु सर्वस्य प्रपंचस्यावास्तवत्वे वर्णजात्याश्रयशरीरमप्यवास्तवमेवेति श
रीरविशेषमधिकृत्य प्रवर्त्तमानं विधिनिषेधशास्त्रमप्यवास्तवं स्या
त् तथा च तद्बोधितस्वर्गनरकयोरप्यवास्तवत्वात्स्वर्गादावनुरागो नरका
दिभ्यश्च भयं न स्यात्। किं च। शास्त्रबाध्यौ बंधमोक्षावपि वास्तवौ न स्या

शरीरं स्वर्गनरकौ बंधमोक्षौ भयं तथा॥ क
ल्पनामात्रमेवैतत्किं मे कार्यं चिदात्मनः॥२०

तामित्याशंक्येष्टापत्त्या परिहरति। शरीरमिति शरीरादिकमेतत्कल्प
नामात्रमेव चिदात्मन सच्चिदात्मन सच्चिदानंदरूपस्य मम एतैः शरीरा
दिभिः न किमपि कार्यं साध्यं विधिनिषेधादिकं तु अविद्यावंतमेवाधिकृत्य
प्रमाणमित्यर्थः २०

स्वर्गादिभिः किं मे कार्यं ~~साध्यं विधिनिषेधादिकं तु अविद्यावंतमेवाधिकृ~~
~~त्य प्रवर्तमानमित्यर्थः~~ मिति प्रागुक्तं। अथेह लोकेनापि मे कार्यं नास्तीत्याह।
अहो जनेति। न द्वैतं पश्यतो मम अहो इत्याश्चर्ये जनसमूहेपि आरण्य

अहो जनसमूहेपि न द्वैतं पश्यतो मम॥ आ
रण्यमिव संवृत्तं क्व रतिं करवाण्यहं॥२१॥

मिव वस्तु वृत्तं संजातं ३ तस्मात् अहं मिथ्यात्वे क्व रतिं प्रीतिं करवाणि न क्वा
पीत्यर्थः॥२१॥ श्रीराम जयराम जय जयराम श्रीराम कृष्ण गोपाळ दामो

ननुश्शरीरस्याहंममतास्पदतयानुरागविषयत्वादहंकारस्यप्यहंनास्प
दत्तयानुरागविषयत्वात्तत्रस्पृहादित्याशंक्याह। नाहमिति। देहो नाहंज
डत्वात् नापिमेदेहः ममनिःसंगत्वात् जीवोहंकारो नाहं कर्तृत्वात् आत्म
नश्चाकर्तृत्वात् कस्तर्हित्वमित्याशंक्याह। अहंहि चिदिति। चित्स्वरूपमेवा
हमित्यर्थः। कुतस्तर्हि विवेकेनापि जीवितस्पृहेत्याशंक्याह। अयमेव

नाहंदेहोनमेदेहोजीवोनाहमहंहिचित्॥ अ
यमेवहिमेबंधआसीद्याजीवितेस्पृहा॥२१॥

हीति। यावज्जीवितेस्पृहा। अयमेवमेबंधः प्रागासीत्। जीवनार्थंहिपु
मान्सुवर्णहरणादिकमपिकरोतीति जीवितेच्छायां बंधहेतुत्वात् इदानीं
तु सच्चिदानंदानुभवशालिनो ममासंगस्य प्राणानुषंगबंधनरूपे जीवि
तेपि स्पृहा नास्तीत्यर्थः २२

अथस्वस्यसर्वाधिष्ठानत्वमुपपन्नाह। अहोइति। अहोइत्याश्चर्ये अनंतम
हांभोधौमयिचित्तवातेसमुत्पन्नेसतिविचित्रैर्नानाविधैर्भुवनरूपैःकल्लो
लैस्तरंगैःद्राक् अत्यर्थंसमुत्थितंउदयोलब्धः तथा वारिधेस्तरंगाइव

अहोभुवनकल्लोलैर्विचित्रैर्द्राक्समुत्थितं॥
मय्यनंतमहांभोधौचित्तवातेसमुद्यते॥२३

मत्तोभुवनानिवस्तुतोनभिन्नानीत्यर्थः॥२३॥ प्रारब्धक्षयपर्यन्तमनुव
र्तितामपीति। अनंतमहांभोधौसर्वव्यापकचित्समुद्रेमयिचित्तवाते

संकल्पविकल्पैकपत्रशालिनी मनोमारुते प्रशाम्यति सति संकल्पादिरहिते सति जीववणिजो जीवात्मलक्षणस्य वणिज्यकर्तुः अभाग्यात्प्रारब्धात्क्षयात्

मय्यनंतमहांभोधौ चित्तवाते प्रशाम्यति॥
अभाग्याजीववणिजो जगत्पोतो विनश्वरः॥२४॥

जगत्पोतः शरीरादिनौकासमूहः विनाशशीलः। विनाशवान्भवतीत्यर्थः॥२४

अ०

अथवा बाधितानुवृत्या स्वस्मिन् सर्वजीवव्यवहारं परस्यान्नाशामयी
ति। आश्चर्यं निःक्रिये निर्विकारे मयि अनंतमहांभोधौ जीवाएव वीचय
स्वतंत्रंगा। उद्यंति अभिव्यक्तावनी वा मिथः परस्परं घ्नंति ताउयंतीव
शत्रुभावाध्यासात्। अन्ये च मिथः खेलंतीव मित्रभावाद्यध्यासात्। अ

मय्यनंतमहांभोधावाश्चर्यं जीववीचयः॥ उ
द्यंति घ्नंति खेलंति प्रविशंति स्वभावतः॥ २५

~~खेचमिथः खेलंती~~विद्याकामकर्मक्षये सति च मयी विशंती वकस्मात्
स्वभावतः। अविद्याकामकर्मस्वभाववसात् उत्पत्यादिकं प्राप्नुवंति स्व
भावतः स्वस्य चिद्रूपस्य अंशरूपेण भावत्तस्तत्रैव प्रविशंति। घटाकाशा
दिपथिद्वमहाकाश इति विवेकः॥ २५

२०

द्वितीयेस्मिन्प्रकरणे शिष्येणानुभवस्थितिः॥ नवेदिता गुरोस्तुष्ट्यै बन्धाश्र
यिपुरस्सरा॥१॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्ये

इति श्रीमदष्टावक्रप्रकरणे शिष्यप्रोक्तं स्वा
त्मानुभवोल्लासपंचविंशतिकं॥ ॥ ॥ ॥ ॥

णोक्तमात्मानुभवोल्लासपंचविंशतिप्रकरणं॥ ॥श्रीरामरामरामराम

शिष्यानुभवपीयूषेज्ञातेपिकरुणावशात्॥तद्दिशानपरीक्षार्थंशिष्यमा
हगुरुःपुनः॥१॥विज्ञातानुभवमपिस्वशिष्यंव्यवहारस्थितंदृष्ट्वातद्दिशा
नपरिक्षार्थंतद्व्यवहारस्थितिं।माक्षिप्यात्मानुभवशालिनोस्थितिमुप
दिशति।अविनाशिनमितिहेशिष्यअविनाशिनेत्रैकालिकसत्ताश्रा

अविनाशिनमात्मानमेकंविज्ञायतत्वतः॥
तवात्मज्ञस्यधीरस्यकथमर्थार्जनेरतिः१॥

लिनंकालेतोप्यवछेदशून्यंआत्मानंदेशतोव्यवछेदशून्यंएकंवस्तुतोप्य
वछेदशून्यंचित्स्वरूपंविज्ञायनिदिध्यास्यतत्वतः।आत्मज्ञस्यअतएवधी
रस्यतवअर्थार्जनेव्यवहारिकार्थसंग्रहेकथंरतिःप्रीतिर्लक्षितइत्याक्षेपः१

ननुज्ञाने सति विषयसंग्रहः कथमनुपपन्न इत्याशंक्य विषयप्रीतेरात्मा
ज्ञानमूलकत्वं सदृष्टांतेनोपपादयति कमाह। आत्मज्ञानादिति। अहो इति सं
बोधने हे शिष्य विषयभ्रमगोचरे विषये या प्रीतिः सा आत्मज्ञानादेव भ
वति। न तु ज्ञानात तद्व्यतिरिक्तविषयाणां बाधादिति भावः अत्र लोकप्र

आत्माज्ञानादहो प्रीतिर्विषयभ्रमगोचरे॥
शुक्तेरज्ञानतो लोभो यथा रजतविभ्रमे॥२॥

सिद्धं दृष्टांतमाह। शुक्तेरिति। यथा रजतविभ्रमे सति शुक्तेरज्ञानतो लोभः
पामराणामप्यनुभवसाक्षिक इत्यर्थः। विषयभ्रमगोचर इत्यत्र विषयस्या
पि पूर्वनिपातो विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणादाम्रवक्ष
ववा। आत्माज्ञानादिति पदं विषयभ्रमगोचर इत्यनेनापि संबध्यते॥२॥

अज्ञानमूला विषयप्रीतिरिति प्रागुक्तं। अथ सर्वाध्यस्ताधिष्ठानतयात्म निज्ञाते सति विषये पुनः पुनः प्रीतिसंभवइत्याह। विश्वं स्फुरतीति॥ साग रे तरंगाइव यथा पृथक् सत्तारहितास्तद्वत् यत्रेदं विश्वं पृथक् सत्तारहि तं स्फुरति॥ स तत्पदार्थो हमस्मीति विज्ञाय साक्षात्कृत्य दीनइव ममेदं

विश्वं स्फुरति यत्रेदं तरंगाइव सागरे॥ सोह
मस्मीति विज्ञाय किं दीनइव धावसि॥ ३॥

भवतीति तत्साकुलइव किं धावसि कथं धावसीत्याक्षेपः॥ ३॥ श्रीरामजी

तदेवं श्लोकत्रयेण ज्ञानिनि शिष्ये दृश्यमानं विषयव्यवहारमाक्षिप्येदा
नीं स विज्ञानिषु विषयव्यवहारं शिष्यपरीक्षार्थं गुरुराक्षिपति ॥ श्लाघा
पीति। शुद्धचैतन्यं श्लाघापि गुरुमुखाद्वेदान्तवाक्यतः साक्षात्कृत्यापि उ
पस्थे समीपस्थे विषये अत्यंतसंसक्तः सन्नात्मज्ञः कथं मालिन्यं मो

श्लाघापि शुद्धचैतन्यमात्मानमिति सुन्दरं ॥ उ
पस्थेत्यंतसंसक्तो मालिन्यमधिगच्छति ॥५॥

न्यमधिगच्छति प्राप्नोति ॥ अस्य प्रकरणस्य शिष्यजिज्ञासार्थमोक्षेय
मुद्रैव प्रवृत्तौ न घत्राक्षेपवाचकपदं न दृश्यते तत्र तदध्याहर्तव्यं ४

पुनस्याश्चर्यमुद्घाक्षिपति। सर्वेति। सर्वभूतेषु ब्रह्मादिस्थावरांतेषु आत्मानं अधिष्ठानभूतं जानतः सर्वभूतानि चात्मनि रज्जौ भुजंगवदध्यस्तानि जानतो मुनेर्विषयेषु ममत्वमनुवर्तत इति आश्चर्यं असंभाव्यं नहि शुक्तिकायामध्यस्तं रजतमिति जानतस्तत्र ममत्वं भवतीति भावः॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि॥<br>
मुनेर्ज्ञानत आश्चर्यं ममत्वमनुवर्तते॥५॥<br>
आस्थितः परमाद्वैतं मोक्षार्थेपि व्यवस्थितः॥ आ<br>
श्चर्यं कामवशगो विकलः केलिशीक्षया॥६॥

आस्थित इति। परमसंजातीयविजातीयस्वगतभेदशून्यमद्वैतमास्थितः साक्षादनुभवतयो मोक्षस्वरूपार्थः सच्चिदानंदात्मा तत्र व्यवस्थितस्तदेकप्रवणोपि कामवशगः सन्केलिशीक्षयाँ नानाक्रीडाभ्यासेन विकलो दृश्यत इत्याश्चर्यं॥६॥

उद्भूतमिति॥ उद्भूतं कामं ज्ञानदुर्मित्रं ज्ञानस्यात्यंतवैरिणं अवधार्यनिश्चि
त्यापि अतिदुर्बलः अतिशयेन ज्ञानबलशून्यः इत्थं वस्तानीकामं विषयमाकां
क्षता कामं वांछति इदं आश्चर्यं कीदृशः॥ अंतकालं अनुसमीपेश्रितः॥ न
हि समीपवर्त्तिन्यंतकाले सत्ति विवेकिनो विषयतृष्णायुक्तेत्यभिप्रायः॥७॥

उद्भूतंज्ञानदुर्मित्रमवधार्यातिदुर्बलः॥ आ
श्चर्यंकाममाकांक्षेत्कालमंतमनुश्रितं॥७
इहामुत्रविरक्तस्यनित्यानित्यविवेकिनः॥
आश्चर्यंमोक्षकामस्यमोक्षादेवविभीषिका॥८

इहेति॥ ऐहिकामुष्मिकभोगविरक्तस्य नित्यमात्मतत्त्वमनित्यंशरीरादिकं त
द्विवेकिनः मोक्षः सच्चिदानंदस्तत्र कामोंतःकरणं यस्य एवंविधस्य ज्ञानिनो
पि [illegible] मोक्षादेव असद्रूपतनुधनवियोगादेव विभीषिका भयं दृश्यते॥ न
हि स्वप्नदृष्टेर्थेनुभूते ननाशोपि जाग्रतो भयं क्वापि दृष्टमिति भावः॥८॥ राम

३०

एवमाक्षेपमुद्भाव्य पूर्वमुक्तं। अथ ज्ञानिनस्तोषरोषावनुचितावितिकंठ
तो निरूपयति। धीर इति। धीरो ज्ञानी लौके विषयान्भोज्यमानोपि तथा नि
दादीना पीड्यमानोपि सर्वदा आत्मानं केवलं सुखदुःखभोगादिरहितं
पश्यन्न तुष्यति। न च कुप्यति तोषरोषहेतूनां केवलात्मनि असंभवज्ञाना

धीरस्तु भोज्यमानोपि पीड्यमानोपि सर्वदा॥ आत्मानं केवलं
पश्यन्न तुष्यति न कुप्यति॥९॥ चेष्टमानं शरीरं स्वं पश्यत्य
न्यशरीरवत्॥ संस्तवे चापि निंदायां कथं क्षुभ्येन्महाशयः॥१०

दित्यर्थः॥९ किं च तोषरोषहेतूनां स्तुतिनिंदादीनां शरीरधर्मत्वाच्छरीरस्य
चात्मभिन्नत्वेनानुसंधानात्कथं ज्ञानिनस्तोषरोषावित्याह। चेष्टमानमि
ति। स्वशरीरं स्वात्मभिन्नं चेष्टाश्रयत्वात् अन्यशरीरवत्। इति यः पश्यति
सः महाशयः संस्तवे स्तुतौ अपि च निंदायां कथं क्षुभ्येत् कथं तोषरोषरूपां
विक्रियां व्रजेदित्याक्षेपः॥१०॥

मार्य्यमारकयोरसत्यत्वानुसंधानात्संनिहितेपिमृत्यौज्ञानिवस्त्रासःक
थमित्याह॥मायामात्रमिति। इदंदृश्यमानंविश्वमार्यमारकादिरूपंसमग्रं
मायामात्रसत्यरूपंपश्यन्नतएवकुतइदंशरीरादिकंजायतेकुत्रचविल
यंयातीत्येवंरूपं~~समग्रंमायामात्रमसत्यरूपंपश्यन्~~न्नकौतुकविरहितस्स

मायामात्रमिदंविश्वंपश्यन्विगतकौतुकः॥अपिसंनिहिते
मृत्यौकथंत्रस्यतिधीरधीः॥११॥निःस्पृहंमानसंयस्यनैराश्ये
पिमहात्मनः॥तस्यात्मज्ञानतृप्तस्यतुलनाकेनजायते॥१२

धीरास्वस्वरूपादचलाधीर्यस्यसःसंनिहितेमृत्यौसत्यपिकथंत्रस्य
तीत्याक्षेपः॥११॥सर्वेषाक्षेपाणांसमर्थनार्थंज्ञानिनोनिरूपयत्वमाह॥नि
स्पृहमिति॥यस्यनैराश्येमोक्षेपिमानसंनिस्पृहंतस्यआत्मज्ञानतृ
प्तस्यब्रह्माहमस्मीतिज्ञानतःसमाप्तसर्वमनोरथस्यकेनतुलनाजायतेन
केनापीत्यर्थः॥१२॥

अ०

ज्ञानिनः हानोपानादिव्यवहारमाक्षिपति। स्वभावादिति। प्रपंचो मिथ्या दृश्य
त्वाच्छुक्तिकारजतवदिर्नुत्येमाने दृ तदृश्यं न किंचन न सत् नाप्यसदिति

स्वभावादेव जानानो
दृश्यमेतन्न किंचन॥
इदं ग्राह्यमिदं त्याज्यं स
किं पश्यति धीरधीः॥१३॥

जानानो निश्चिन्वन् यो धीरधीः स इदं ग्राह्यमिदं त्याज्यमिति कथं पश्य
तीत्याक्षेपः॥ अत्र हेतुमाह। अंतर्गलितेति। अंतःकरणात्यक्ताः कलुषा

याविषयवासनायेनतस्यनिर्द्वंद्वस्यशीतोष्णादिसमचित्तस्यअतएव
निराशिषःविषयवांछाविहीनस्ययदृछयादैवयोगात्आगतःप्रा
प्तोभोगःभुज्यमानोविषयःदुखायनभवतितुष्टयेचनभवति॥ १४॥

अंतस्त्यक्तकषायस्यनिर्द्वंद्व
स्यनिराशिषः॥यदृछयागतो
भोगोनदुखायनतुष्टये॥१४

इत्याक्षेपद्वारोपदेशकंचतुर्दशकंप्रकरणंसमाप्तं॥

इतिश्रीमद्विश्वेश्वरविरचितायांमष्टावक्रटीकायामाक्षेपद्वारोपदेश
कंनामतत्रीयंप्रकरणंसमाप्तं॥ ॥गुरुणैवमुपाक्षिप्तःशिष्योज्ञानदृ
शोह्वसन्॥ ज्ञानिन्यशेषचेष्टानांस्पष्टमाचष्टसंभवम्॥१॥ छ छ

एवं तावद्गुरुणा परीक्षार्थमाक्षिप्तः शिष्यः प्रारब्धवशाद्बाधितानुवृत्त्याज्ञा
निन्यपि सर्वव्यवहाराणामुपपत्तिमात्मज्ञानोल्लासवशादेवाह षड्भिः
श्लोकैः। हंतेति। हंत स्वात्मज्ञानोल्लासिते हर्षे। हे गुरो आत्मज्ञस्य सर्वा
धिष्ठानतया स्वात्मानं जानतः। अतएव धीरस्य विषयैव विक्षिप्तचि

हंतात्मज्ञस्य धीरस्य खेलतो
भोगलीलया॥ न हि संसारवा
हीकैर्मूढैः सह समानता॥१॥

२ खेलतः क्रीडतः। संसारवाहिकैः संसारवृत्तिप्रभृतिभिर्मूढैर्देहाद्यात्म[illegible] २
१ त्तस्य भोगलीलया विषयभोगादिरूपया क्रीडया प्रारब्धवशात्प्रवृत्तया १
३ वेदिभिः सह न हि समानता नैव तुल्यत्वं। तदुक्तं भगवता। तत्त्ववित्तु महाबा ३
४ हो गुणकर्मविभागयोः॥ गुणा गुणेषु वर्तंत इति मत्वा न सज्जते॥ श्रीराम ४

ननु संसारव्यवहारस्थो ज्ञानी कथं न संसारतुल्य इत्याशंक्य हर्षादिरहित
त्वात्तस्य वैलक्षण्यमाह। यत्पदेति। अहो इति संबोधने हे गुरो यद्वा अहो
आश्चर्यं शक्राद्याः सर्वदेवता अपि यत्पदं प्रेप्सवः यत्पदप्राप्तिनिमित्तं
दीनास्तत्पदप्राप्तितः शोच्याः वर्त्तंते तत्र सच्चिदानंदाख्ये पदे स्थितो तत्त्वंप
दार्थैक्यं न वर्त्तमाना योगी लब्धसाक्षात्कारो विषयलाभान्न हर्षं प्राप्नो

यत्पदं प्रेप्सवो दीनाः शक्राद्याः सर्वदेवताः॥ अहो तत्र स्थितो
योगी न हर्षमुपगच्छति॥ २॥ तज्ज्ञस्य पुण्यपापाभ्यां स्पर्शो ह्यं
तर्न जायते॥ न ह्याकाशस्य धूमेन दृश्यमानापि संगतिः॥ ३

ति नापि तदपगमादुद्विग्नो भवतीत्यर्थः। तज्ज्ञस्य विध्यकिंकरत्वं वक्तुं पु
ण्याद्यसंस्पर्शमाह। तज्ज्ञस्येति। तत्त्वंपदार्थैक्याभिज्ञस्य पुण्यपापाभ्यां
सह अंतःकरणधर्माणां स्पर्शः संबंधो न जायते ज्ञानाग्निः सर्वकर्माणि
भस्मसात्कुरुतेऽर्जुनेति स्मृतेः अत्र दृष्टांतमाह। नहीति। यथा हि आकाश
स्य धूमेन सह दृश्यमानापि संगतिर्नास्ति तथात्मज्ञस्य न पुण्यादिसंगति
रित्यर्थः ३

ननु कर्मणि कृते कथं न पुण्यादिस्पर्श इत्याशंक्य ज्ञानिनो विधिनिषेधानि
यमत्वमाह। आत्मैवेति। येन महात्मना इदं दृश्यमानं सर्वं जगत्। आत्मै
वेति ज्ञातं तं ज्ञानिनं यदृच्छया प्रारब्धवशादेव वर्त्तमानं को वचनकर्ता
निषेद्धुं वर्त्तयितुं वा क्षमः समर्थो न कोपीत्यर्थः। तदुक्तं शारीरकभाष्ये। अ

आत्मैवेदं जगत्सर्वं ज्ञातं येन महात्मना॥ यदृच्छया वर्त्तमानं
तं निषेद्धुं क्षमेत कः॥४॥ आब्रह्मस्तंबपर्यंते भूतग्रामे चतु
र्विधे॥ विज्ञस्यैव हि सामर्थ्यमिच्छानिच्छाविवर्जने॥५॥

विद्यावद्विषयो दैवे इति प्रबोधनीयाः एवासौ मुक्तो राजेव वंदिभिरिति स्मृ
तिरपि।४। ननु ज्ञानिनोपि न यदृच्छया प्रवर्त्तते किंतु इच्छयैव इच्छानिच्छ
योर्निवर्त्तयितुमशक्यत्वादित्याशंक्याह। आब्रह्मेति। यद्यपि ब्रह्माणमा
रभ्य स्तंबपर्यंते इच्छानिच्छे विवर्जयितुमशक्ये तथापि विज्ञस्यैव इच्छा
द्वेषनिवर्त्तने सामर्थ्यमतो यदृच्छया प्रवर्त्तमानो ज्ञानी न विधिनियम्य इत्यर्थः ५

अद्वैतज्ञानेन द्वितीयस्य बाधितत्वात्। ज्ञानिनाभयहेतुः कोपि नास्तीत्यु
पसंहरति। आत्मानमद्वयं कश्चिज्जानाति जगदीश्वरमिति। कश्चित्स
हस्रेष्वेक एव जगदीश्वरं तत्पदार्थं आत्मानं त्वंपदार्थं अद्वयं अभिन्नं
जानाति स यद्वेत्ति प्रारब्धवशाद्बाधितानुवृत्त्येदं कर्त्तव्यमिति मन्यते

आत्मानमद्वयं कश्चिज्जानाति जगदीश्वरं॥
यद्वेत्ति तत्स कुरुते न भयं तस्य कुत्रचित्॥ ६

तत्करोति। एवं कुर्वतस्तस्य कुत्रचित् इहामुत्र वा भयं नास्ति। भयहेतोरद्वै
तज्ञानबाधितत्वादिति भावः ६ इत्यष्टावक्रमुनिविरचितेध्यात्मशा
स्त्रे शिष्यप्रोक्तानुभवोल्लासषट्कविवरणं॥ एवमुल्लासषट्केन स्व
शिष्यापि परिक्षिते। गुरुर्द्देनोपदेशार्थं लयपयोगमथाब्रवीत् १ ७७

एवमुक्त्वा सषट्केन शिष्ये परिक्षिते सति पुनरुपदेशार्थमाचार्यो लय
मुपदिशति श्लोकचतुष्टयेन न न त इति। हे शिष्य शुद्धबुद्धस्वभावकेना
पि देहगेहादीनां अहंकारममकारास्पदेन न संसर्गोस्ति। अतः शुद्धः संग
स्त्वं किं त्यक्तुं किमुपोहातुं वेच्छसि तस्मात्संघातस्पदेनहस्य विलयं कुर्व

न ते संगोस्ति केनापि किं शुद्धस्त्यक्तुमिच्छसि॥ संघातविलयं
कुर्वन्नेवमेव लयं व्रज॥१॥ उदेति भवतो विश्वं वारिधेर्वै
रि बुद्बुदः॥ इति ज्ञात्वैकमात्मानमेवमेव लयं व्रज॥२॥

न्नाहं देह इति निरसनं कुर्वन्नेव देहादिनिरसनं रूपमेव लयं व्रज॥१
उदेति। हे शिष्य भवतः सकाशाद्विश्वमुदेति। भवदभिन्नमेव यथा वारि
धेः सकाशाद्बुद्बुदो वारिधेरभिन्न एवोदेति। इत्येवं प्रकारेण एकं सजा
तीयादिभेदरहितमात्मानं ज्ञात्वा एवमेव एकात्मज्ञानमेव लयं व्रज १
ईवत्ता॥२॥

ननु ब्रह्मैक्ये सतो भिन्नतया हारसर्पादिभेदप्रतीयमानेकथं हानादिविलय
इत्यत आह। प्रत्यक्षमिति। प्रत्यक्षमपीदं व्यक्तं दृश्यं विश्वममले त्वयि ना
स्त्यवअवस्तुत्वाद्रज्जुभुजंगवत् तस्मादेवमेलयं व्रजाद्वितीयस्य हे
योपादेयस्य वाभावादित्यर्थः ३ समेति पूर्णआत्मानेदं पूर्णस्त्वमत्त एव
दैवशादुपभूतयोः सुखदुःखयो समः यिछानि छयोश्छयोश्च समस्तथा

प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि॥ रज्जुसर्प इव
व्यक्तमेवमेवलयं व्रज॥ ३॥ समदुःखसुखः पूर्ण आशानैराश्य
योः समः॥ समजीवितमृत्युः सन्नेवमेवलयं व्रज ४ इति लयचतुष्कं

जीवितमृत्यो वा समो निर्विकारः। सुखदुःखादीनां मनात्मधर्माणां तुच्छ
त्वानुसंधानात् त्वं सुखदुःखादिषु सम ब्रह्मदृष्टीरूपं लयं व्रजेत्यर्थः॥ ४
इति श्रीमद्विश्वेश्वरविरचितायां मष्टावक्र टी० लयचतुष्टयं नाम पंच
मप्रकरणं॥ ५॥ गुरुणैवपरिक्षार्थमुपदिष्टे लये सति। पूर्णात्मनो लयादी
नाशिष्यो संभ्रममब्रवीत्॥ १॥

तदेवगुरूणात्वंतपरिक्षार्थंलययोगेसमुपदिष्टेसतिलयाद्यभावोपपादक
मात्मज्ञानमनुवदन्नेवशिष्यः पूर्णात्मनोलयाद्यसंभवमाहचतुर्भिःश्लो
कैः।आकाशवदिति। अहमात्माकाशवदनंततः।नन्वनंतस्यात्मनोदेहा
दिनिवासःकथमित्यतआह। घटवदितिप्राकृतंप्रकृति।कार्यंजगदेहा

आकाशवदनंतोहंघटवत्प्राकृतंजगत्॥
इतिज्ञानंतथैतस्यनत्यागोनग्रहोलयः१

दिकंघटवत्।यथाचात्मनोदेहादिरेकदेशावछेदकएवव्योम्नस्वघटा
दित्यर्थः॥अत्रप्रमाणमाह।इतीति।इत्येवं।वेदांतसिद्धंज्ञानमतोत्रनान्य
थाभावशंकेत्यर्थः।तथेति।तथासत्यात्मनोनंतत्वेसत्यतस्यात्मनस्त्या
गोग्रहणंलयश्चनसंभवतिरिपेछिन्नस्येवघटादेत्यागादिदर्शनादित्यर्थः१

घटाकाशदृष्टांते देहात्मनो भेदिशंकास्यादित्यपरितोषदाहा। महोदधिरि
ति। स्पष्टं॥१॥ समुद्रवीचिदृष्टांते देहात्मनो विकारविकारिशंकास्यादित्य
परितोषादाहा। अहमिति। अहं वा अहमेव सर्वभूतेषु प्रकृतिप्राकृतिकेषु
सत्तास्फूर्त्यादिप्रदत्वेनास्मि। ×अहं सं इति स्पष्टं। ३। शुक्तिदृष्टांते प्यात्मनि
महोदधिरिवाहं स प्रपंचो वीचिसंभवः॥ इति ज्ञानं॥२॥ अहं स शुक्तिसं
काशो रूप्यवद्विश्वकल्पना॥ इति ज्ञानं॥३॥ अहं वा सर्वभूतेषु सर्वे
भूतान्यथो मयि॥ इति ज्ञानं॥४॥ इत्युपदेशः॥ ॥ ॥ ॥
परिछिन्नत्वशंकास्यात्तद्व्यावृत्त्यर्थमाह। ×अथो तो हेतोः सर्वभूतान्य
धिष्ठानभूते मयि वर्त्तंत इति ज्ञानं वेदांतसिद्धं तथा सत्येतस्यात्मनस्त्या
गादिकं न संभवतीत्यर्थः॥४॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टाव
क्रटीकायां शिष्यप्रोक्तमुत्तरचतुष्टयं नाम षष्टमप्रकरणं॥ श्रीराम०

अ०

~~मय्यनंतमहांभोधौ विश्वपोत इतस्ततः । भ्रमति स्वांतवातेन न ममास्त्यसहिष्णु~~
ता यथा योगानुष्ठाने व्यवहारं निरंकुशं । आशंक्य शिष्यप्रोल्लासाद्ब्रवीद्गुरु
मुत्तरं १ ननु लययोगाभावे संसारविक्षेपो निरंकुशः प्रसरः स्यादित्याशंक्य
तस्यानिष्टत्वाभावं अनुभवपंचकेनोत्तरमाह शिष्यः । मयीति । मय्यात्मनि अ
नंते महासमुद्रे विश्वाख्यः पोतः नौका स्वांतवातेन । मनः पवनेन इतस्ततो भ्र

मय्यनंतमहांभोधौ विश्वपोत इतस्ततः ॥ भ्रमति स्वांतवातेन
न ममास्त्यसहिष्णुता ॥ १ ॥ मय्यनंतमहांभोधौ जगद्वीचि
स्वभावतः ॥ उदेतु मास्तु मायातु न मे वृद्धिर्न च क्षतिः ॥ २ ॥

मति । अत्र ममासहिष्णुता नास्ति समुद्रस्य वनौकापरिभ्रमण इत्यर्थः १ जग
द्व्यवहारस्यानिष्टत्वाभावः पूर्वमुक्तः । अथ जगदुदयापगमयोरपि नास्ति
निष्टतेत्याह । मयीति । मयि आत्मनि अनंते विनाशरहिते व्यापके भोधौ समुद्रे
जगदाख्या वीचिस्वभावता दृश्यत्वादिस्वभावादुदेतु च अपरम स्तमायातु
ममातु तदुदये वृद्धिर्नास्ति व्यापकत्वात् तदपगमे च क्षतिर्नास्ति अनंतत्वा
दित्यर्थः २

३०

पूर्वदृष्टांते स्वात्मनो जगद्विकार इति भ्रमः स्यात्तद्वारणार्थमाह। मयीति। म
यि अनंत महांभोधौ नाम प्रसिद्धं विश्वं कल्पनाभ्रममात्रमेव न तु वास्तवि
कं अंतःकरणादरमिति शांतः प्रपंचोपप्लवरहितः अत्र हेतुमाह निरा
ए कार इति तदात्मज्ञानमेव अहमास्थितः। आश्रितो न तु लययोगं तस्य

मय्यनंतमहांभोधौ विश्वं नाम विकल्पना॥ अतिशांतो नि
राकार एतदेवाहमास्थितः॥३॥ नात्मभावेषु नो भावस्तत्रा
नंते निरंजने॥ इत्यसक्तोऽस्पृहः शांत एतदेवाहमास्थितः ४

पूर्वमेव दूषितत्वात्॥३॥ अतिशांतत्वं स्पष्टयति। नात्मेति। आत्मा भावेषु
देहादिषु आधेयतया नास्ति व्यापकत्वात् भावो देहादिस्तत्रात्मनि नास्ति
निरंजनत्वात् इति कारणाद् अहं असक्तः संसर्गरहितोऽत एवास्पृहः इच्छा
दिधर्मातीतः अत एव शांत इत्यर्थः ४ श्री राम जय राम जय जय राम

अ०

इत्यादिरहितत्वे हेत्वंतरमप्याह। अहो इति। अहो इत्याश्चर्ये रूपमलौकिकं चिन्मात्रं चैतन्यमेवाहं जगत्सर्वं प्रपंचजातं इंद्रजालोपमं। दर्शनकालेपि पृथक्सत्तारहितं। अतो विश्वस्य पृथक्सत्तारहितत्वात्। मम कुत्र वस्तुति

अहो चिन्मात्रमेवाहमिंद्रजालोपमं जगत्॥ अतो मम कथं कुत्र हेयोपादेयकल्पना॥५॥ इत्यनुभवपंचकं॥ तदा बंधो यदा चित्तं किंचिद्वांछति शोचति॥ किंचिन्मुंचति गृह्णाति न हृष्यति न कुप्यति १

कथं केन कारणेन हेयोपादेयबुद्धिः स्यान्न कुत्रापीत्यर्थः॥५॥ इति श्रीमद्विश्वेश्वरविरचितायां अनुभवपंचकविवरणं समाप्तं॥७॥ इत्थं परिक्षितज्ञानं शिष्यमेवाभिनंदितुं। गुरुर्बंधस्य मोक्षस्य व्यवस्थां सम्यगब्रवीत्॥१॥ राम

तदिदं सप्तभिः प्रकरणैः स्वशिष्यं सम्यक् परीक्ष्य बंधमोक्षव्यवस्थानिरू
पणव्याजेन गुरुः स्वशिष्यानुभवमभिनंदति चतुर्भिः श्लोकैः। तदेति। हे शि
ष्य अतो मम कथं कुत्र हेयोपादेयकल्पनेत्युक्तं तत्त्वयोक्तं तत्तथैव यतश्चि
त्तं वांछादिविकारवद्भवति तदैव जीवस्य बंध इत्यर्थः॥१॥ तदा मुक्तिरिति।

तदा मुक्तिर्यदा चित्तं न वांछति न शोचति॥ न मुंचति न
गृह्णाति न हृष्यति न कुप्यति॥२॥ तदा बंधो यदा चित्तं सक्तं
कास्वपि दृष्टिषु॥ तदा मोक्षो यदा चित्तं असक्तं सर्वदृष्टिषु॥३॥

यदा चित्तं वांछादिविक्रियातीतं तदा मुक्तिरित्यर्थः॥२॥ तदेवं पृथक् बंध
मोक्षावुक्तौ। अथ समुच्चयेन बंधमोक्षावाह। तदा बंध इति॥ यदा चित्तं का
स्वनाप्यनात्मदृष्टिषु संसक्तं तदा बंधः॥ यदा चित्तं सर्वास्वप्यनात्मदृष्टि
ष्वसक्तं तदा मोक्ष इत्यर्थः॥३॥ श्रीकृष्णनारायणवासुदेवरामकृष्णाजी

अ०

अस्तुवा बाधितानुवृत्त्यादग्धपटायमाना सर्वापि विषयदृष्टिस्तथाप्य
हंकारनिवृत्तौ मोक्षस्तदनुवृत्तौ च बंध इति वदन्नेव शिष्योमर्थमभिनं
दितुमनुवदति। यदा नाहमिति। यदाहमित्येवंरूपः प्रथमोध्यासोऽनर्था
मूलभूतो निवर्त्तते तदा मोक्षः यदा च सोनुवर्त्तते तदा बंधनमिति श्लो

यदा नाहं तदा मोक्षो यदाहं बंधनं तदा।
मत्वेति हेलया किंचिन्मा गृहाण विमुंच मा
॥४॥ इत्यष्टावक्रे बंधमोक्षचतुष्टयं॥८

त्वा हेलया नायासेनैव हानोपानादिक्रियाणामकर्तृत्वमस्ति। अकर्तात्मज्ञा
नेन कर्तृत्वाभिमानोच्छेदादिति भावः ४॥ इति श्रीमद्विश्वेश्वर०गुरुत्रोक्तं बं
धमोक्षव्यवस्था प्रकरणं समाप्तं॥८॥ शिष्योक्तानुभवस्यैव दार्ढ्यार्थं गु
रुणोच्यते। निर्वेद स्पष्टमष्टाभिरिच्छादित्यजनात्मकः।१॥ श्रीरामजयरामज

मत्वेति हे त्वया किंचिन्मार्ग्र हाणेति यदुक्तं। तत्र किं द्वारमित्यपेक्षायां गुरुरनु
मोदनमुद्रया वैराग्याष्टकमाह। कृतेति। कृताकृते इदं कर्त्तव्यमिदमकर्त्त
व्यमित्यभिनिवेशौ द्वंद्वानि सुखदुःखादीनि कस्य कदा वा शांतानि निवृत्ता
नि अपि तु न कस्यापि न कदापि शांतानि। एवं ज्ञात्वा इह कृताकृतादिषु निर्वे
दादभिनिवेशादिपरित्यागादेव त्यागपरो भव। कीदृशस्त्वं अव्रती नास्ति

कृताकृते च द्वंद्वानि कदा शांतानि कस्य वा। एवं ज्ञात्वेह नि
र्वेदाद्भव त्यागपरोऽव्रती ॥१॥ कस्यापि तात धन्यस्य लोक
चेष्टावलोकनात्। जीवितेच्छा बुभुक्षा च बुभुत्सोपशमं गता२

व्रतं कुत्राप्याग्रहो यस्य सः ॥१॥ चित्तधर्मत्यागरूपो निर्वेदस्तु कस्यचिदेव स्या
न्न तु सर्वस्येत्याह। कस्यापीति। हे तात शिष्य सहस्रेषु मध्ये कस्यचिदेव ध
न्यस्योत्पत्तिविनाशरूपलोकचेष्टावलोकनात्। जीवितेच्छा भोगेच्छा ज्ञा
नेच्छादय उपशमं गताः। इदं तु तादृशनिर्वेदसंपन्नशिष्यमभिनंदितुमे
वोच्यते। न तूपदिश्यत इति प्रागुक्तमेव ॥२॥ श्रीरामजयराम जयजयराम

ननु ज्ञानिनां सर्वत्रेच्छोपशमः किंहेतुक इत्यत आह। अनित्यमिति। इदं दृश्यमा
नं सर्वप्रपंचजातं अनित्यं चैतन्येऽध्यस्तं तथापृथक्त्वेनगृह्यमाणं न सत्। आ
ध्यात्मिकाधिदैविकाधिभौतिकतापत्रयदूषितं अतएव असारं तुच्छं अ
तएव हेयं पृथक्सत्तया नैवादरणीयमिति निश्चित्य ज्ञानी शाम्यति कुत्रापि
इच्छां न कुरुते॥३॥ द्वंद्वानामारब्धकर्मवशाद्‌वश्यंभावित्वात्तत्रेच्छानिच्छे

अनित्यं सर्वमेवेदं तापत्रितयदूषितं॥ असारं निंदितं हे
यमिति निश्चित्य शाम्यति॥३॥ कोऽसौ कालो वयः किं वा य
त्र द्वंद्वानि नो नृणां॥ तान्युपेक्ष्य यथाप्राप्तवर्त्ती सिद्धिमवाप्नुयात्॥४॥

विहाय यथाप्राप्तभोगी मुक्तिमाप्नुयादित्याह। कोसाविति। यत्र नृणां द्वंद्वानि सु
खदुःखादीनि न संति। असौ कः कालः का वा बाल्यादिवयो लक्षणा शरीरावस्था
अपि तु न कापीति विचार्य तानि द्वंद्वान्युपेक्ष्य तत्रेच्छामनिच्छामकृत्वा यथाप्राप्ते
षु अनासक्ततया वर्त्ती सिद्धिं मुक्तिं अवाप्नुयादित्यर्थः॥४॥ श्रीरामरामराम॥

तर्कशास्त्रादिज्ञानेषुनिष्ठानकर्त्तव्यानानाविप्रतिपत्तिग्रस्तत्वान्नापिक
र्मसुनापिअष्टांगयोगादिष्विस्याह।नानामतमिति।महर्षीणांगौतमजैमि
निप्रभृतीनांमतंनानाविधंअपरिछिन्नंदृष्ट्वातर्कशास्त्रादिभ्योनिर्वेदं
आपन्नस्तथासाधूनांकर्मनिष्ठानांमतंनानाविधंकेचिद्धोमपराकेचिज्ज
पपराःकेचित्कृच्छ्रचांद्रायणादिपराइतिनानाविधंदृष्ट्वाकर्मभ्योपिनि

नानामतंमहर्षीणांसाधूनांयोगिनांतथा॥दृष्ट्वानिर्वेदमापन्नःकोनशाम्यतिमानवः।५।

र्वेदमापन्नस्तथायोगिनांमतंनानाविधंकेचिदष्टांगयोगपराः।केचिन्म
हदादिप्रसंख्यानपराः।इतिनानाविधंदृष्ट्वाष्टांगयोगादिभ्योपिनिर्वेदमाप
न्नः।केवलमात्मानुसंधाननिष्ठःशाम्यतिकःसुखंनप्राप्नोतीत्यर्थः॥५॥राम

केवलज्ञाननिष्ठामेवाश्रित्य कर्मादिकं मा कुर्वीत्याह। कृत्वेति। निर्वेदसमता
युक्त्या। निर्वेदो नाम विषयानासक्तिस्तथा शत्रुमित्रेषु समता सर्वत्रात्मबुद्धि
र्युक्तिर्नाम श्रुत्यनुग्राहकस्तर्कः। तैः चेतनस्य सच्चिदानंदस्य मूर्तिपरिज्ञानं
स्वरूपसाक्षात्कारं कृत्वा। तदनंतरं नास्ति कश्चित् गुरुर्यस्य स नकिंगुरुः एवं
विधो यः स संसृतेः सकाशादात्मानं तारयति॥६॥ चेतनस्वरूपज्ञानोपायमा

कृत्वा मूर्तिपरिज्ञानं चेतनस्य नकिंगुरुः॥ निर्वेदसमता
युक्त्या यस्तारयति संसृतेः॥६॥ पञ्चभूतविकारांस्त्वं भूतमा
त्रान्यथार्थतः॥ तल्लक्षणाद्बंधनिर्मुक्तः स्वरूपस्थो भविष्यसि ७

हापञ्चेति। हे शिष्य भूतविकारान् देहेंद्रियादीन् यथार्थस्तत्त्वतः भूतमात्रान्प
श्यन् तु। आत्मस्वरूपान्नाए वं सति त्वं तल्लक्षणाद्बंधनिर्मुक्तः शरीराहंभावनि
र्मुक्तः सन् शरीरादिविविक्तात्मस्वरूपस्थो भविष्यसि। शरीरादावनात्मत
याज्ञाते सति तत्साक्षिभूत आत्मा स्फटिति सुज्ञेय इति भावः॥७॥ रामराम

नन्वेवमात्मनिष्ठातेपि तत्रनिष्ठा कथं स्यादित्याशंक्य। वासनात्यागादित्याह।
वासना इति। वासना विषयवासना एव संसार इति कारणात्। वासनास्त्वं
विमुंच। वासनात्यागाद्धात्मनिष्ठायां सत्यां तस्य त्याग इत्यर्थः। अद्य अधु
ना वासनात्यागेसति स्थितिर्यथा तथा यथा प्रारब्धं तया स्थितिरित्यर्थः
॥८॥ निर्वेदाष्टकं विवरणं॥ विषयाणामभावेपि तुष्टिर्निर्वेद ईरितः। तत्त्विध्य

वासना एव संसार इति सर्वा विमुंच ता॥ तत्यागो वासनात्यागा
त्स्थितिरद्य यथा तथा॥ निर्वेदाष्टं॥८॥ विहाय वैरिणं काममर्थं
चानर्थसंकुलं॥ धर्ममप्येतयोर्हेतुं सर्वत्रानादरं कुरु॥१॥ राम

र्थं च विषयैर्वैतृष्ण्यं शांतिरीर्यते १ विषयैर्विनापि संतोषरूपो निर्वेदः। प्रा
गुक्तः अथेदानीं विषयतृष्णोपशाममभिनंदन मुद्धपा गुरुरुदाहरति। विहा
येति। कामं वैरिणं ज्ञानशत्रुं विहाय तथा अनर्थसंकुलं अर्जनेरक्षणे व्यये चा
नेकदुखशोकसंकुलं अर्थं विहाय तथा एतयोः कामार्थयोरनऽर्थहेतुं ध
र्ममपि विहाय सर्वत्र त्रिवर्गहेतु कर्मसु अनादरं उपेक्षां कुरु १ रामराम

ननुमित्रक्षेत्रादिफलकेषुकर्मसुकथमनादरइत्याशंक्यमित्रादीनामनि
त्यत्वमाह॥ स्वप्नेति। हेशिष्यमित्रादिसंपदः स्वप्नेंद्रजालवत्पश्ययत्तोदिना
नित्रीणिपंचवास्थायिन्यइत्यर्थः।१। सर्वत्रानादरंकुर्वीत्यनेनोक्तंवैरा
ग्यंपुरुषार्थहेतुरित्याह। यत्रयत्रेति। यत्रयत्रयेषुयेषुप्रसिद्धेषुविष

स्वप्नेंद्रजालवत्पश्यदिनानित्रीणिपंचवा
मित्रक्षेत्रधनागारदारादायादसंपदः॥१॥
यत्रयत्रभवेत्तृष्णासंसारंविद्धितत्तदा॥प्रौ
ढवैराग्यमास्थायवीततृष्णःसुखीभवः॥२

येषुतृष्णाभवेत्तमेवसंसारंविद्धि। विषयतृष्णायाएवकर्मद्वारासंसार
हेतुत्वात्। अतःप्रौढवैराग्यंप्राप्तेष्वप्रीत्यभावमास्थायवीततृष्णःअ
प्राप्तार्थेच्छारहितःसन्नात्मतिष्ठयासुखीभवेत्यर्थः॥२॥ श्रीरामजयराम

३५

अमुमेवार्थंभाग्यंतरेणाह॥तस्मामात्रेति॥तस्मामात्रस्वरूपएव बंधःकर्मद्वारा
बंधहेतुत्वात्तन्नाशःतस्मानाशएवमोक्षोनिवृत्तिहेतुत्वात्तन्नाशो
मोक्षइत्यत्रहेतुमाह॥भावेति॥भवतीतिभावोदेहादिर्विषयस्तत्राभावमा

॥तस्मामात्रात्मकोबंधस्तन्नाशोमोक्षउच्यते॥
॥भावासंसक्तिमात्रेणप्राप्तितुष्टमुहुर्मुहुः॥४॥

त्रेणमुहुर्मुहुःवारंवारप्राप्तिःतुष्टिःआत्मप्राप्तिजःसंतोषस्यादतःतस्माना
शएवमोक्षइत्यर्थः॥प्राप्तिस्तुष्टिरितिपाठेप्राप्तिःस्यात्तुष्टिश्चस्यादित्यर्थः॥४॥

ननु बुभुत्सारूपात्स्मात्कथं त्याज्येत्याशंक्याह। त्वमेक इति। इह जगति त्रय एव
पदार्था आत्मा जगत् अविद्या च तत्र आत्मा तावत्त्वमेवैकः चेतनः शुद्धो न तु
विभिन्न इति स्वात्मानमेवैकं पूर्णं ज्ञात्वा नान्या पुनरात्मबुभुत्सा युक्ता। ना

त्वमेकश्चेतनः शुद्धो जडं वि
श्वमसत्तथा॥ अविद्यापि न किं
चित्सा का बुभुत्सा तथापि ते॥५॥

पि जगद्बुभुत्सा युक्ता जगतः असत्वात् जडत्वाच्च नापि अविद्याबुभुत्सा युक्ता
तस्य अपि सदसद्विलक्षणरूपानिर्वचनीयत्वात् तथा च तव बुभुत्सापि का
युक्ता न काचिदपीत्यर्थः॥५॥ श्रीरामजय रामजयजय राम श्रीराधाकृष्ण॥

जउं विश्वं असदित्युक्तं तद्विशदयति। राज्यमिति। राज्यादीनि सर्वाणि संस
क्तस्यापि आसक्तिं कुर्वाणस्यापि तव जन्मनि नानाजन्मसु नष्टानीत्यतो
विश्वमसदित्यर्थः॥६॥ बुभुक्षापि न कर्त्तव्येति प्रागुक्तं। अथ धर्मार्थ
कामेष्वपीछा न कार्येत्याह। अलमिति॥ अर्थादीनां अलं अर्थकाम धर्मे

राज्यं सुताः कलत्राणि शरीराणि सुखानि च॥ संसक्तस्यापि न
ष्टानि तव जन्मानि जन्मनि॥६॥ अलमर्थेन कामेन सुकृते
नापि कर्मणा॥ एभ्यः संसारकांतारे न विश्रांतमभून्मनः॥७

षु इछा न कार्येत्यर्थः। अत्र हेतुमाह। एभ्य इति। यतः कारणात्संसारकांता
रे संसारलक्षणे दुर्गमे वर्त्मनि भ्राम्य तत तव एभ्यः अर्थादिभ्यः विश्रां
तं भ्रमणाविछेदवन्मनो नाभूदतोर्थादित्सा न कर्त्तव्येत्यर्थः॥७॥ राम

तस्मायाउपशमः प्रागुक्तः। अथक्रियामात्रोपशममाह। कृतमिति। हेशिष्य आ

यासदं प्रयासप्रदं। अतएवदुःखंकर्मकायादीनांकतिजन्मानिनकृतंकर्म

णातुल्यानर्थात् वल्लक्ष्मस्तत्तस्मादद्यापि अधुनापिकर्मभ्यउपरम्यते।८॥इति

श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायांगुरूक्तमुपशमप्रकरणं

दशमं॥१०॥उक्ताशांतिर्नविज्ञानंविनाकस्यापिजायते। इतिनिश्चितुमेवाहगुरुः

कृतंनकतिजन्मानिकायेनमनसागिरा॥दुःखमायासदं

कर्मतदद्याप्युपरम्यतां॥८॥शमाष्टं॥भावाभावविकारश्च

स्वभावादितिनिश्चयी॥निर्विकारोगतक्लेशः सुखेनैवोपशाम्यति॥१

ज्ञानाष्टकं। उक्ताशांतिर्विज्ञानादेवस्यान्नान्यथेतिबोधयितुंज्ञाना

ष्टकमाह तत्रादौ ज्ञानसाधनान्याह। भावाभावेति। भावाभावरूपोविकारःस्व

भावात्मायातत्संस्काराद्वजायतेनतुनिर्विकारादात्मनइतिनिश्चयवान्

पुरुषोनिश्चयबलादेवसुखेनैवअनायासेनैवज्ञानमात्रेणतुष्टासन्नुपशा

म्यति॥१

ननु मायाजडत्वात् एव कथं भावाभावविकार इत्याशंक्याह। ईश्वर इति॥ ईश्वर
एव सर्वनिर्माता नत्वन्यो जीव ईश्वरपरवशत्वात् इति निश्चयवशादेवांतर
गलितसर्वाशः सर्वेतृप्तः अत एव शांतो निश्चलचित्तः सन् क्वापि न सज्जते॥१
नन्वीश्वर एव चेत्सर्वनिर्माता तर्हि कांश्चिद्दरिद्रान् कांश्चित्तु धनिनः तथा कां

ईश्वरः सर्वनिर्माता नेहान्य इति निश्चयी॥ अंतर्गलितसर्वाशः
शांतः क्वापि न सज्जते॥१॥ आपदः संपदः काले दैवादेवेति नि
श्चयी॥ तृप्तः स्वस्थेंद्रियो नित्यं न वांछति न शोचति॥२॥ राम राम

श्चित्सुखिनः कांश्चित्तु दुःखिनो रचयतस्तस्य वैशम्यनैर्घृण्ये स्यातां इत्याशंक्या
ह। आपद इति। काले समयविशेषे आपदः संपदश्च दैवात्प्राक्तनादृष्टादेव ई
श्वरपरिपाचितादेवेति निश्चयी अत एव तृप्तो वीततृष्णः अत एव नित्यस्व
स्थेंद्रियो विषयानाकृष्टेंद्रियः अप्राप्तं न वांछति नष्टं न शोचतीत्यर्थः॥२

ननूक्तनिश्चयवानपि कर्माणि कुर्वन्नेव बध्यत इत्याशंक्याह। सुखेति। कर्म
फलभूते सुखादिके दैवं दृष्टादेव इति निश्चयी अतएव मय्या इदं फलं साध्यमि
त्यदर्शी अतएव निरायासः श्रमरहितः प्रारब्धैव शात् कुर्वन्नपि न लिप्यते
कर्मजानर्थभागी न भवतीति कर्तृत्वाध्यासरहितत्वादित्यर्थः॥४॥ ननु कुर्वंश्चे

सुखदुःखजन्ममृत्यु दैवादेवेति निश्चयी॥ साध्यादर्शी निरा
यासः कुर्वन्नपि न लिप्यते।४। चिंतया जायते दुःखं नान्यथे
हेति निश्चयी॥ तया हीनः सुखी शांतः सर्वत्र गलितस्पृहः ५॥

कथं निरायास इत्याशंक्याह चिंतयेति। इह दुःखं चिंतया जायते नान्यथेति
निश्चयी अतएव तया चिंतया हीनः अतएव शांतः स्थिरांतःकरणः अतए
व सर्वत्र सुखतत्साधनयोः गलितस्पृहः पुरुषः सुखी भवतीत्यर्थः॥५॥ ॥

उक्तसाधनैः सिद्धज्ञानिनां निजदशां निरूपयति। नाहमिति॥ अहं देहो न त
थामे देहो न किंतु नित्यबोधोहमिति। ज्ञानवशाद्देहादौ निवृत्ताहंममाभिमा
नः देहादीनां कृतमकृतं च मया कृतमिति यथा कैवल्यं प्राप्तः कृताकृतं
न स्मरतीति तद्वदित्यर्थः ६ ब्रह्मेति। ब्रह्माणं हिरण्यगर्भमारभ्य तृणस्तंबप

नाहं देहो न मे देहो बोधोहमिति निश्चयी॥
कैवल्यमिव संप्राप्तो न स्मरत्यकृतं कृतं ६
आब्रह्मस्तंबपर्यंतमहमेवेति निश्चयी॥
निर्विकल्पः शुचिः शांतः प्राप्ताप्राप्तविनिर्वृतः ७

र्यंतं सर्वं जगदहमेवेति प्रत्यक्षनिश्चयवान्पुरुषः निर्विकल्पः संकल्पविक
ल्पशून्यः अत एव शुचिर्विषयासंगरूपमलरहितः अत एव शांतो निश्च
लांतःकरणः अत एतद एव प्राप्ताप्राप्तयोरपि विषययोर्निवृत्तापरमसंतोष
वानात्मानंदपूर्णत्वात् ७

नन्वात्मज्ञानी कथं निर्विकल्पादिरूप इत्याशंक्याह। नानेति। अधिष्ठानत
त्त्वसाक्षात्कारेण ध्वस्तबाधे सति। नानाश्चर्यमयं विश्वं जगत् न किंचि
त्स्वरूपकसत्ताशून्यमिति निश्चयी पुरुषः निरतवासनः केवलचिद्रूपः स

नानाश्चर्यमिदं विश्वं न किंचिदिति निश्चयी। निर्वासनः
स्फूर्तिमात्रो न किंचिदिव शाम्यति॥८॥ इति ज्ञानाष्टकं एकादशं॥

न किंचिदेव विशेषव्यवहारगोचर एव शाम्यति निवृत्तकार्यकारणोपा
धिर्भवति तत्त्वज्ञानेन सर्वस्यापि स्वप्नवन्निवृत्तेरित्यर्थः॥८॥ इति श्रीमहे
श्वरविरचितायामष्टावक्रटीकायां ज्ञानाष्टकप्रकरणं दशमं॥ ॥

गुरुणादीरितं ज्ञानं न किंचिदिवशाम्यति। तत्वस्मिन्न प्याभिख्यातुशि
ष्यावदति सांप्रतं॥ ऊंकं ज्ञानाष्टके न किंचिदिवशाम्यति इति तदेव शिष्यः
स्वस्मिन्नविशदपन्नु मेवमेवाष्टकमाह। तत्र प्रथमकायवाङ्मनसांव्या

कायकृत्यासहः पूर्वं ततो वाग्विस्त
रासहः॥ अथचिंतासहस्तस्मा
देवमेवाहमास्थितः॥१॥ ॥ ॥

पारो परमाह। कायेति। अहं पूर्वमपि कायिकं कर्मासहः ततो हेतो र्वाग्विस्तरा
सहजपकर्मासहः अथतो मनोव्यापारादिरूपाया चिंता तत्राऽसहस्तस्मा द्धेतो
एवमेव निर्व्यापारएव अहं आस्थितः। सासांकल्पेन वेदोक्तकर्ममर्यादादोन
तिष्ठामीत्यर्थः १

उक्तव्यापारत्रयोपरमे हेतुं वदन्नेवोक्तमनुवदति। प्रीत्यभावेनेति॥ क्षयि
ष्णुफलजनकस्य शब्दादेः शब्दकायकामिद्वयस्य प्रीत्याभावेन प्रीत्यवि
षयत्वेन आत्मनश्चादृश्यत्वेन त्रिविधविक्षेपेभ्यो व्यावृत्तं। एकाग्रं हृदयं
यस्य स विक्षेपैकाग्रहृदय इति मध्यमपदलोपि समासः। क्षयिष्णुफलजन

प्रीत्यभावेन शब्दादेरदृश्यत्वेन चात्मनः॥ वि
क्षेपैकाग्रहृदय एवमेवाहमास्थितः॥१॥ राम

चा

कजपादेः प्रीत्यविषयत्वाज्जपादिरूपविक्षेपमनास्ति आत्मनश्चादृश्यत्वा
ध्यानाद्यविषयत्वाच्चिंतारूपोपि विक्षेपो मम नास्ति इत्यर्थः। अतएवमेव
मेव स्वरूपेणैव अहमास्थितः॥१॥ श्रीरामजयरामजयजयराम॥॥॥॥

ननु तथापि समाध्यर्थं व्यवहारः कर्त्तव्य इत्याशंक्य नेत्याह। समाध्यासादी
ति। कर्तृत्वभोक्तृत्वाद्यनर्थाध्यासादिभिर्विक्षिप्तौ सत्यां तन्निरासार्थं समाध
य व्यवहारो नान्यथेति नियमं विलोक्य शुद्धात्मज्ञाननिमग्न्य ध्यासभावा
देवमेव समाधिशून्य एवाहमास्थित इत्यर्थः॥ हेयेति। पूर्णात्मदर्शिनो मम
समाध्यासादिविक्षिप्तौ व्यवहारसमाधयोः॥ एवं विलोक्य नियममेव
मेवाहमास्थितः॥३॥ हेयोपादेयविरहादेवं हर्षविषादयोः॥ अभा
वादद्य हे ब्रह्मन्नेवमेवाहमास्थितः॥४॥ आश्रमानाश्रमं ध्यानं
चित्तस्वीकृतवर्ज्जनं॥ विकल्पं मम वीक्ष्यैतैरेवमेवाहमास्थितः॥५॥
म हेयोपादेयवस्तुनो विरहात् एवममुना प्रकारेण हर्षविषादयोरप्यभावा
त् हे ब्रह्मन् गुरो अद्य अधुना अहमेवमेवास्थितः॥४॥ आश्रमेति॥ आ
श्रमानाश्रमाध्यानं च तथा तत्प्रयुक्तं चित्तस्वीकृतं च तद्वर्ज्जनं च एतैस्त्रि
भिरेव मम विकल्पं वीक्ष्य अहमेवमेव एतत्त्रितयरहित एवास्थितः॥५॥

कर्मत्ति। यथैव कर्मानुष्ठानमज्ञानात् तथैव उपरमः कर्मोपिरमोपि अज्ञा
नादेव इदं सम्यक् यथार्थतो बुध्वा अहमेव कर्मतदुपरमरहित एवास्थि
तः॥६॥ अचिंत्यमिति। अचिंत्यब्रह्मेति चिंतमानोप्यसौ आत्मा चिंतारूपंभ
जति तस्माद्धेतो तद्भावनं अचिंत्यब्रह्मेति भावनं त्यक्त्वा अहमेव भावना

कर्मानुष्ठानमज्ञानाद्यथैवोपरमस्तथा॥ बुध्वा सम्यगिदं तत्व
मेवमेवाहमास्थितः॥६॥ अचिंत्यं चिंत्यमानोपि चिंतारूपं भजत्य
सौ॥ त्यक्त्वा तद्भावनं तस्मादेवमेवाहमास्थितः॥७॥ एवमेव कृतं ये
न स कृतार्थो भवेदसौ॥ एवमेव स्वभावो यः स कृतार्थो भवेदसौ॥८॥

रहित एवास्थितः॥७॥ एवमेवेत्यवस्थायाः साधकोपि श्रेष्ठः किंपुनस्तत्स्वभा
व इति कैमुतिकन्यायेनाह। एवमेवेति। येन एवमेव सर्वक्रियारहितमस्वस्व
रूपसाधनवशात्कृतं सोसौ कृतार्थो भवेत्। यस्तु एवमेव स्वभाववान्सौ
सौ कृतार्थो भवतीति किं वक्तव्यमित्यर्थः॥८॥ इति श्रीमद्विश्वेश्वरविरचितां

यां भास्करकृतायां गीतायां अष्टमोध्यायः॥८॥

८१

एवमेवेत्यवस्थायाः फलीभूतं सुखस्थितिं।प्राह शिष्यस्फुटीकर्तुमहमा
से यथासुखं।अथैमेवेत्यवस्थायाः फलीभूतं सुखावस्थां स्वकीयां विश
दयितुमाह।अकिंचनेति॥अकिंचनभवं सर्वसंगाऽभावप्रभवं स्वास्थ्यं
चित्तस्थैर्यं कौपीनाल्लेकौपीनासक्तावपि दुर्लभं अस्मात्कारणादहं त्या

अकिंचनभवस्वास्थ्यं कौपीनत्वेपि दुर्लभं॥ त्यागादाने विहा
यास्मादहमासे यथासुखं॥१॥ कुत्रापि खेदः कायस्य जिह्वा कु
त्रापि खिद्यते॥ मनः कुत्रापि तत्त्यक्त्वा पुरुषार्थे स्थितः सुखं॥२

गादाने विहाहैंया त्यागादानयोरासक्तिं विहाय यथासुखं सुखमनति
क्रम्यासे न कदाचिद्दुःखीत्यर्थः१ कुत्रापीति।कुत्रापि शरीरकर्मणि कर्मणि
खेदः कुत्रापि वाचिक कर्मणि जिह्वा खिद्यते॥ कुत्रापि ध्यानादिकर्मणि म
नः खिद्यति।अतोहं तत्त्रयमपि त्यक्त्वा सुखं यथास्यात्तथा पुरुषार्थे स्वा
त्मन्यवस्थितः२

अ०

ननुकायवाङ्मनोव्यापारत्यागेदेहाद्यवसद्यःपतेत्।भोजनाद्युपादानादेर
पित्यागादित्याशंक्याह।कृतमिति।शारीरेंद्रियादिभिःकृतंकिमपितत्त्वत
आत्मकृतंनस्यादितिसंचिंत्ययदायच्छारीरादिकर्मकर्तुमायातितद
हंकारशून्यत्वेनकृत्वाअहंयथासुखमासेकनिष्ठावज्ञपस्वीकार्यापु

कृतंकिमपिनैवास्यादितिसंचिंत्यतत्त्वतः॥यदायत्कर्तु
मायातितत्कृत्वासेयथासुखं॥३॥कर्मनैष्कर्म्यनिर्बंधाभा
वादेहस्थयोगिनः॥संगात्संयोगविरहादहमासेयथासुखं४

रुषार्थार्थिनि इत्याशंक्याह।कर्मेति।कर्मनैष्कर्म्यनिर्बंधरूपाभावात्स्वभा
वाद्देहस्थयोगिनएवअहंतुदेहसंयोगाद्देहसंयोगविरहादपियथासुखं
आसेतथाचममदेहाद्यसंगाभावान्नकर्मनैष्कर्म्यनिर्बंधइत्यर्थः॥४॥

अथ लौकिकव्यापारेपि ममाऽननिर्बंध इत्याह। अर्थेति। मम स्थित्यादीनां साध्यौ अर्थानर्थौ न स्तः पूर्णात्मदर्शित्वात् तस्मादनासक्त्या तिष्ठन् गच्छन्
स्वपन् वाऽहं यथासुखं आसे॥५॥ एवं भंग्यंतरेणाह। स्वपत इति। स्वपतो यत्न
रहितस्य मे मम हानि र्नास्ति यत्नवतः श्रवा मम सिद्धि र्नास्ति अस्मात्कारणा
अर्थानर्थौ न मे स्थित्या गत्या वाशयनेन वा॥ तिष्ठन् गच्छन् स्वपंस्त
स्मादहमासे यथासुखं॥५॥ स्वपतो नास्ति मे हानिः सिद्धिर्यत्नवतो न
वा॥ नाशोल्लासौ विहायास्मादहमासे यथासुखं॥६॥ सुखादिरूपानिय
मं भवेष्वालोक्य भूरिशः॥ शुभाशुभे विहायास्मादहमासे यथासुखं॥७॥
त्यत्नाय त्नयोनां नाशोल्लासौ विहाय अहं यथासुखं आसे॥६॥ सुखादिति
भवेषु अवतारेषु सुखादिरूपानियमं सुखदुःखादि धर्माणां अनित्यत्वं भू
रिशो बहुशः स्थलेष्वालोक्य अस्मात्सुखाद्यनित्यत्वदर्शनाद्धेतोरहं य
थासुखमासे ७

इतिश्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां यथासुखं समाप्तं॥७॥
उदीरितां सुखावस्थां समर्थयितुमात्मनि आह शिष्यः शमावस्था चतुःश्लो
क्या गुरुं प्रति। पूर्वं तु गुरुणा प्रशमाष्टकमुक्तं। संप्रती तु शिष्यः स्वसुखा
वस्थासमर्थनार्थमात्मनः शमावस्थामाह। कृत्येति। प्रकृत्या स्वाभावे

इति यथासुखं सप्तकं॥ प्रकृत्या शू
न्यचित्तो यः प्रमादाद्भावभावनः। निद्रि
तो बोधित इव क्षीणसंसरणो हि सः॥१

न विषयेषु शून्यचित्तः प्रमादाद बुद्धिपूर्वकमारब्धवशाद्वा न भावयति
चिंतयतीति भावभावनः क इव निद्रितो बोधित इव सयथा निद्रावशाच्छू
न्यचित्तः केनचिद्बोधितत्वात्प्रमादाद्भावभावनः। एवंविधो यः पुमान्वि
षयेषु शांतचित्तः सः हि निश्चितं क्षीणसंसरणः संसारहेतुविषयानुस्म
रणाभावादित्यर्थः॥१

४३

क्व धनानीति। विषयभावनाशून्यस्य पूर्णात्मदर्शिनो मे यदा स्पृहा विषय
तृष्णा गलिता तदा मम धनानि क्व मित्राणि क्व। विषयरूपा दस्यवश्चौराः
क्व शास्त्रं च क्व विज्ञानमहं ब्रह्मास्मीति निदिध्यासनं च क्व। धनादि विज्ञा

क्व धनानि क्व मित्राणि क्व मे विषयदस्यवः। क्व शास्त्रं क्व च विज्ञा
नं यदा मे गलिता स्पृहा॥ २॥ विज्ञाने साक्षिपुरुषे परमात्मनि चे
श्वरे॥ नैरास्ये मोक्षबंधे च न चिंता मुक्तये मम॥ ३॥ ॥ ॥

नांतेष्वपि ममास्था नास्तीत्यर्थः॥ २॥ विज्ञान इति देहेंद्रियादीनां साक्षिपुरुषे त्वं
पदार्थे परमात्मनि चेश्वरे तत्पदार्थे विज्ञाते ब्रह्माहमस्मीति साक्षात्कृते स
ति नित्यनिर्मुक्तचिद्रूपात्मानुभवात् मोक्षबंधेऽपि नैराश्ये सति मम मुक्त्यर्थं
न चिंता ३

ननुप्रमादाभ्रांत्यावभावकः कथं शांत इत्याशंक्याह। अंतर्विकल्पेति। अंतःक
रणेविकल्पशून्यस्य बहिर्भ्रांतस्य वस्वछंदचारिणः ज्ञानिनोदशा। तादृशा
एव ज्ञानिना एव जानते।।४।। इतिश्रीमद्विश्वेश्वरविरचितायामष्टाव

अंतर्विकल्पशून्यस्य बहिः स्वछंदचारिणः। भ्रांतस्य
वदशास्तास्तास्तादृशा एव जानते।।४।। इति शांति चतुष्कं

क्रटीकायां शिष्यप्रोक्तं शांति चतुष्टयं।। दुर्लक्ष्यमात्मनस्तत्वं प्रत्याप
यितुमंजसा।। मुमुक्षुस्त्वोपदेशार्थं गुरुराहदयोदधिः।।१।। ।। ।। ।।।

यद्यपि प्रथममात्मतत्वोपदेशः कृत एव तथापि तदात्मतत्वं मंतेवासिभ्यः
पुनरुपदेष्टव्यं दुर्लक्ष्यत्वद्यथा छंदोग्योपनिषदितिनवकृत्वः श्वेतके
तुं प्रतीत्याचार श्रीछ्यार्थममकृदात्मोपदिष्टंगुरुमाह। तत्रादोषत्तानाधि
कारणमनधिकारणंचाह। यथावत्तथेति। सत्वबुद्धिमान्शिष्ययथावत्तथा

यथावत्तथोपदेशो नकृतार्थः सत्वबुद्धिमान्॥ आ
जीवमपिजिज्ञासुः परस्तत्रविमुह्यति॥१॥राम

आपाततोप्युपदेशान्नकृतार्थः स्यात्। अतएवकृतयुगेप्रणवमात्रोपदेशा
दपिशिष्याः कृतार्था बभूवुः परः असत्वबुद्धिर्यावज्जीवंजिज्ञासुरपिबहु
धोपनिष्टोपिविमुह्यति। तथापिविरोचनो ब्रह्मणाबहुधोपिमुमोहैवेत्यर्थः१

३०

अथ बंधमोक्षौ सुखोपायेन संग्रहेण निरूपयति। मोक्ष इति विषयेष्वनुरा
गाभाव एव मोक्षः विषयेष्वनुरागस्तु बंध इत्यर्थः। एतावदेव बंधमोक्षयो
र्विज्ञिष्टं ज्ञानं। एवं ज्ञात्वा च त्वं यथेच्छसि तथा कुरु २ इदं तु विषयवैर
स्यं तत्त्वबोधसाध्यमित्याह। वाग्मीति। अयं प्रसिद्धः आत्मतत्त्वबोधः वा

मोक्षो विषयवैरस्यं बंधो वैषयिको रसः॥ एतावदेव वि
ज्ञानं यथेच्छसि तथा कुरु॥ ३॥ वाग्मिप्राज्ञमहोद्योगं जनं
मूकजडालसं॥ करोति तत्त्वबोधोयमतस्त्यक्तो बुभुक्षुभिः ३

ग्मिनं वक्तुं चतुरवाक्यभाषिणं मूकं करोति प्राज्ञं नानाविशेषवेदिनं जनं ज
डं करोति। महोद्योगं नानाक्रियानुष्ठानशालिनं अलसं निष्क्रियं करोति॥
मनसः प्रत्यक्प्रवणतया वागादयः कुंठिता भवंति॥ तद्रहिता भवतीत्यर्थः
यतोयं तत्त्वबोधः वागादीन्कुंठितान्करोति अतो हेतोर्भोगेच्छुभिस्त्यक्तः अ
नादृत इत्यर्थः ३

८५

तत्त्वबोधस्तिध्यर्थमुपदिशति॥ न त्वमिति। त्वं देहादिरूपो न यतश्चिद्रूपोसि।
नापि तव देहसंबंधः। असंगो ह्ययं पुरुष इति श्रुतेः। न वा भवान् कर्ता भो
क्ता। यतः कर्तृभोक्तृप्रमृतीनां सदा साक्षी यो यत्साक्षी स तद्भिन्नः। यथा
घटसाक्षी घटादित्यर्थः॥ अतस्त्वं देहतत्संबंधिषु निरपेक्षः सन्सुखं

न त्वं देहो न ते देहो भोक्ता कर्ता न वा भवान्। चिद्रूपोसि सदा सा
क्षी निरपेक्षः सुखं चर॥४॥ रागद्वेषौ मनोधर्मौ न मनस्ते
कदाचन॥ निर्विकल्पोसि बोधात्मा निर्विकारः सुखं चर।५।

चरेत्यर्थः।४। निरपेक्षमुपपादयितुमाह। रागेति। रागद्वेषौ तु मनोधर्मौ
न तु तव धर्मौ मनस्तु कदाचिदपि तव संबंधि न भवति अतस्तद्ध्यासा
द्रागाद्यध्यासं कुर्वित्यर्थः। ननु रागद्वेषौ ममैव धर्मौ कथं नेत्याशंक्याह। नि
र्विकल्प इति। यतस्त्वं निर्विकल्पः बोधात्मा चासि। अतो रागादिविकाररहितः
सन्सुखं चरेत्यर्थः।५।

३०

किंच सर्वभूतेष्विति। सर्वभूतेषु कारणत्वेनानुस्यूतमात्मानं विज्ञाय विभाव्य सर्वभूतानि चात्मनि अध्यस्तानीति विभाव्य अहंकारादेः सर्वस्यात्मत्वेनैव स्फुरणात् अहंममाभिमानरहितस्त्वं सुखी भव॥६॥ सर्वभूता

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। विज्ञाय निरहंकारो निर्ममस्त्वं सुखी भव॥६॥ विश्वं स्फुरति यत्रेदं तरंगा इव सागरे॥ तत्त्वमेव न संदेहश्चिन्मूर्त्ते विज्वरो भव॥७॥ राम

नि चात्मानीत्यत द्विशदयति॥ विश्वमिति। यत्र इदं विश्वं सागरे तरंगा इवाधिष्ठानाभिन्नं चैतन्यं त्वमेव अतःकारणात् हे चिन्मूर्त्ते त्वं विज्वरो भव चिन्मात्रोऽहमित्यनुभवान्निर्वृत्तसर्वसंतापो भवेत्यर्थः॥७॥ राम

परमकारुणिकतया पुनः पुनर्बोधयति। अक्षुब्धेति। अक्षुब्धस्वतान्तः अक्षुब्धा अत्र चिद्रूपतामैयां संभावनाविपरीतभावनारूपं मोहं कुरुष्व कुर्यीः अत्रैत्यक्त्वै विशदयति। ज्ञानेति। ज्ञानस्वरूपः प्रकृतेः परस्त्वं कीदृशस्त्वं भगवान् तत्पदार्थः। तथा आत्मा त्वंपदार्थः॥८॥ गुणैरिति। गुणैरिंद्रियादि

अक्षुब्धस्वान्तः अक्षुब्धस्वान्तः मोहं कुरुष्व भो॥ ज्ञानस्वरूपभगवानात्मा त्वं प्रकृतेः परः॥८॥ गुणैः संवेष्टितो देहस्तिष्ठत्यायाति याति च॥ आत्मा न गंता नागंता किमेनमनुशोचसि॥९॥ देहस्तिष्ठतु कल्पांतं गच्छत्वद्यैव वा पुनः॥ क्व वृद्धिः क्व च वा हानिस्तव चिन्मात्ररूपिणः॥१०॥

भिः संवेष्टितो देह इह लोके तिष्ठति तथा आयाति तथा किंचित्कालं याति गच्छति देहादिभिन्न आत्मा तु न गंता नाप्यागंता अतोऽहं मरिष्यामीत्येवमेनं किं शोचसि देहधर्मैरात्मानं मा शुच इत्यर्थः॥९॥ नापि देहस्थित्यक्रांतिभ्यां तव वृद्धिहानी स्तो हा देह इति। नित्यं चिन्मात्ररूपिणस्तव देहस्थित्यानं

वृद्धिर्नवा देहनिवत्या हानिरित्यर्थः॥१०॥

किंच। त्वयीति। विश्वाख्या वीचिः स्वपि त्वय्यनंतचित्समुद्रे उदेतु अथवास्त
मायातु नाम तथापि तेन वृद्धिर्न च क्षतिस्तवानंतत्वादित्यर्थः॥११॥ ताते
ति। सर्वस्य सर्वस्य त्वदभिन्नत्वात् किं हेयोपादेयं कथं केन वा प्रकारेण हेयमु
मुपादेयं कुत्र वा हेयमुपादेयमित्यर्थः॥१२॥ किंच। एकस्मिन्निति। एकस्मिन्

त्वय्यनंतमहांभोधौ विश्ववीचिः स्वभावतः॥ उदेतु वास्तमायातु न
ते वृद्धिर्न च क्षति॥११॥ तात चिन्मात्ररूपोसि न ते भिन्नमिदं जगत्॥
अतः कस्य कथं कुत्र हेयोपादेयकल्पना॥१२॥ एकस्मिन्नव्यये शांते चि
दाकाशेमले त्वयि॥ कुतो जन्म कुतः कर्म कुतोहंकार एव च॥१३॥ एम

सजातीयविजातीयस्वगतभेदशून्ये अव्यये शांते च कार्यशून्ये चिदाकाशे
निर्मले च सर्वोपाधिशून्ये त्वयि कुतो जन्म कुतश्च कर्म कुतश्चाहंकारः द्विती
यस्य हेतोरभावात् अव्ययस्य च जन्मासंभवात् कार्यशून्यस्य च कर्तृत्वा

संभवात् निर्मलस्य चाहंकारसंभवादित्यर्थः॥१३

एकत्वमुपपादयति। यत्वमिति। यद्यत्कार्यं पश्यसि तत्र कारणरूपस्त्वं एव एकः प्रभाससे कटकांगदादौ स्वर्णवदित्यर्थः॥१४॥ अयं सोहमिति। कारणरूप आत्मैवमिति निश्चित्य भेदभ्रमं त्यज। तथा च निर्विकल्पो विगतनानाप्रतिभासः सन् सुखीभव। द्वितीयप्रतिभानाद्धि दुःखं भवतीत्यर्थः॥१५

यत्वं पश्यसि तत्रैकस्त्वमेव प्रतिभाससे। किं पृथक्भासते स्वर्णात्कटकांगदनूपुरं॥१४॥ अयं सोहमयं नाहं विभागमिति संत्यज॥ सर्वमात्मेति निश्चित्य निर्विकल्पः सुखीभव॥१५॥ तवैवाज्ञानतो विश्वं त्वमेकः परमार्थतः॥ त्वत्तोन्यो नास्ति संसारी नासंसारी कश्चन॥१६॥

विभागत्यागयुक्तिमाह। तवैवेति। तवैव अज्ञानतो ज्ञानकृतं विश्वं विश्वाकारो विक्षेपः। अतः परमार्थस्त्वमेकः। अतः संसार्यसंसारीवत्वत्तोनान्यः कश्चिदित्यर्थः॥१६॥ [illegible] श्रीरामजयरामजयजयराम॥ रामकृष्ण

भ्रांतिमात्रमितिे॥इदं विश्वं भ्रांतिमात्रसिद्धं। अतोर्हेतोर्न किंचित। पृथक
सत्तारहितमित्यर्थः। इति निश्चयी अतएव सर्वस्यानिरस्तत्वान्निर्वास
नस्फूर्त्तिमात्रः सन्न किंचिद्विदिवनिरस्ताशेषयः सन्शाम्यति॥१७॥

भ्रांतिमात्रमिदं विश्वं न किंचिदिति निश्चयी॥ निर्वासनः स्फूर्त्तिमात्रो
न किंचिदिव शाम्यति॥१७॥ एक एव भवांभोधावासीदस्ति भविष्यति॥
न ते बंधोस्ति मोक्षो वा कृतकृत्यः सुखं चर॥१८॥ मा संकल्पविकल्पाभ्यां
चित्तं क्षोभय चिन्मय॥ उपशाम्य सुखं तिष्ठ स्वात्मन्यानंदविग्रहे॥१९॥

एक एवेति। कालत्रयेपि भवांभोधौ एकस्त्वं वै मे। अतस्तव बंधमोक्षौ न स्तः
अतस्त्वं कृतकृत्यः सन् सुखं चर॥१८॥ मासंकल्पेति। हे चिन्मय त्वं संकल्प
विकल्पाभ्यां चित्तं माक्षोभय। उपशाम्य उपरतसंकल्पविकल्पो भव। आ
नंदविग्रहस्त्वमात्मनि सुखं तिष्ठ॥१९॥

ध्यानमपि त्यजेत्याह। त्यजेति। सर्वत्र ध्यानं त्यज। कुत्रापि ध्याने माकार्षीरित्य
र्थः। एतदेव विषदयति मा किंचित्त हृदि धारयति। मननमपि त्यजेत्याह। आ
त्मेति। आत्मा त्वं सदा मुक्त एवासि। अतो विमृश्य विचार्य किं फलं करिष्य
सि नित्यमुक्तत्वादित्यर्थः॥२०॥ इति श्रीमद्विश्वेश्वरविरचि० तत्त्वोपदेशविंश

त्यजावधानं सर्वमोत्रे किंचिद्धृदि धारय॥ आत्मा त्वं मुक्त एवासि किं वि
मृष्य करिष्यसि॥२०॥ इति तत्त्वोपदेशविंशतिकं॥ आचक्ष्व शृणु वा तात
नाना शास्त्राण्यनेकशः॥ तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते॥१॥

तिकं॥ पृथक्सत्वेन सर्वस्य विस्मृतिर्मुक्तिसाधनं। तस्या ह्यनर्थविच्छेदद्वार
णत्यत्र वर्ण्यते॥ तत्त्वज्ञानेन सर्वप्रपंचस्य पृथक् सत्तया विस्मरणकारिणैव त
स्मापायादिद्वारा मुक्तिर्नान्यथेति विशेषमुपदिशति। आचक्ष्वेति। हे तात त्वं
नाना शास्त्राणि अनेकवारं शिष्येभ्यः आचक्ष्व गुरुभ्यः शृणु वा तथापि न तव
सर्वविस्मरणादृते स्वास्थ्यं श्रेयो नेत्यर्थः। सुषुप्तौ तु यद्यपि विषयाविस्मरण
मस्ति तथापि अज्ञानविस्मरणं नास्तीति भावः। जीवन्मुक्तस्य तु सर्वस्याध्यस्त
त्वानुसंधानरूपं विस्मरणमस्तीति भावः १

अ०

सर्वविस्मरणे सति चित्तं निरस्तसर्वाशं भवतीति सूचयन्नाह। भोगमिति। हे वि
ज्ञ त्वं भोगं कुरु कर्म वा कुरु समाधिं वा कुरु॥ तथापि चित्तं अत्यर्थं रोचयिष्यति
कीदृशं चित्तनिरस्तसर्वासं सर्वविस्मरणे सति सर्वाशाऽनुदयादित्यर्थः॥२॥
सर्वतत्त्वाविलये सति तु कृतेनापि कर्मणा दुःखहेतुरायासो न भवतीति सू

भोगं कर्म समाधिं वा गुरु विज्ञ तथापि ते॥ चित्तं निरस्तसर्वाशमत्यर्थं
रोचयिष्यति॥२॥ आयासात्सकलो दुखी नैनं जानाति कश्चन॥ अने
नैवोपदेशेन धन्यः प्राप्नोति निर्वृतिं॥३॥ व्यापारे खिद्यते यस्तु निमे
षोन्मेषयोरपि॥ तस्यालसधुरीणस्य सुखं नान्यस्य कस्यचित्॥४॥

चयन्नाह। आयासादिति। सकलो जनः आयासादेव दुखी भवति परं तु कश्च
न एतं आयासं न जानाति दुःखहेतुरयमिति न वेत्ति। अनेनेति। आयासात्
सकलो दुःखीत्यनेनैवोपदेशेन धन्यः सुकृती निर्वृतिं परमसुखं प्राप्नो
ति॥३॥ व्यापारनासक्तिः सुखहेतुरित्याह। व्यापारेति। यः कर्मणि निमिषोन्मे
षयोरपि व्यापारे खिद्यते अनासक्तो भवति। तस्य अलसधुरीणस्य क्रि
याभिनिवेशरहितस्य सुखं नान्यस्य क्रियाभिनिवेशयुक्तस्य॥४॥ राम

सर्वतत्त्वाविलये सति द्वंद्वहानिरपि भवतीति सूर्यं चेत्याह॥ इदं कृतमिति।
इदं कृतमिदं नो त्यादि द्वंद्वैर्मुक्तं यदा मनो भवति तदा पुरुषार्थचतुष्टयेपि
निरपेक्षं भवेत॥ द्वंद्वातीतस्य जीवन्मुक्तत्वादित्यर्थः॥५॥ पुरुषार्थकामना
दिनिरपेक्षस्तु विरक्तकामुकाभ्यां विलक्षण इत्याह॥ विरक्त इति॥ मुमुक्षुः

इदं कृतमिदं नेति द्वंद्वैर्मुक्तं यदा मनः॥ धर्मार्थकाममोक्षे
षु निरपेक्षं तदा भवेत॥५॥ विरक्तो विषयद्वेष्टा रागी वि
षयलोलुप॥ ग्रहमोक्षविहीनस्तु न विरक्तो न रागवान् ६

सन् यो विषयद्वेष्टा स विरक्तः कथ्यते। कामसापेक्षः सन् यो विषयलोलुपः
स रागीति कथ्यते यस्तु ग्रहमोक्षविहीनः स विरक्तसरक्ताभ्यां विलक्षणः
सर्वत्तो निरपेक्षतया हानोपादानेच्छादहितत्वादित्यर्थः॥ ६॥ राम कृष्ण

अ०

ननुज्ञानिनोऽपिहानोपादानादिव्यवहारंदृश्यतइत्यतआह॥ हेयोपादेयते
ति॥ निर्विचारदशास्पदंअविवेकदशामयीभूतास्पृहातृष्णाजीवतितावत्
त्पर्यंतमेवहेयोपादेयताहानोपादानादिव्यवहारःसंसाररक्षस्यशाखां
कुरोभवति। ज्ञानिनांतुस्पृहाभावात्सत्यपिहानादिव्यवहारेसंसारशा

हेयोदेपादेयता
वत्संसारविटपांकुरः॥ स्पृहाजीवतियाव
द्वैनिर्विचारदशास्पदम॥ ७॥ प्रवृत्तौजायतेरागोनिवृत्तौद्वे
षएवहि॥ निर्द्वंद्वोबालवद्धीमानेवमेवव्यवस्थितः॥ ८॥

खाप्रसरोनभवतीत्यर्थः॥ ७॥ किंच। प्रवृत्ताविति। प्रवृत्तौसरागप्रवृत्तौसत्या
मुत्तरोत्तरंविषयेषुरागोजायते। विषयविद्वेषपूर्वकंनिवृत्तौसत्यामुत्तरो
त्तरंविषयएवहिजायते॥ अतोधीमान्ज्ञानिबालवत्शुभाशुभानुसंधा
नरहितनिर्द्वंद्वः॥ रागद्वेषविहीनःसन्एवमेवरागजप्रवृत्तिद्वेषजनि
वृत्तिरहितएवस्थितःकेवलमारब्धवशादेवकदाचित्प्रवृत्तःकदाचिन्नि
वर्त्ततेचनतुरागद्वेषवशादित्यर्थः ८

५०

किंच। हातुमिच्छतीति। यस्तु रागी स दुःखजिहासया संसारं हातुमिच्छति। वि
तरागस्तु निर्दुःख रागो ह्यदुःखरहितत्वात्तस्मिन् संसारे सत्यपि न खिद्यते
खेदं न प्राप्नोति। ९। पश्येति। अहं ज्ञानी त्रिकालज्ञातत्वदर्शी मुक्त इत्येवं
यस्य मोक्षेप्यभिमानो नासौ ज्ञानी। तथाहं योगाभ्यासी देहस्यैव गुणकर्म
धर्मरतः मम देहो वज्राहारो वज्ररूप वा सामर्थ्यं इत्येवं देहेप्यभिमानो ना

हातुमिच्छति संसारं रागी दुःखजिहासया॥ वीतरागो हि निर्दुःखस्त
स्मिन्नपि न खिद्यते॥ ९॥ यस्याभिमानो मोक्षेपि देहेपि ममता तथा॥ न
वा योगी न वा ज्ञानी केवलं दुःखभागसौ॥ १०॥ हरो यद्युपदेष्टा ते हरिः
कमलजोपि वा॥ तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते॥ ११॥

सौ योगी योगी न वा ज्ञानी केवलं त्वसौ दुःखभाक् दुःखहेत्वहंममाभिमा
नाऽनिवर्तनेरित्यर्थः। सर्वविस्मरणोपदेशमुपसंहरति। हर इति। स्पष्टः॥ ११॥

अ०

श्री

इतिश्रीमच्छिवेश्वरविरचितायां विशेषोपदेशप्रकरणं। अथातः श्लोकविंशत्यात तत्त्वस्य दशा च्यते॥ विद्यातत्त्वप्रकर्षस्य व्यक्तये गुरुणा स्फुटं। अथान्येषामपि विद्यायां प्रावृत्त्यर्थं तत्त्वज्ञानफलव्याचिख्यासया तत्त्वज्ञदशां गुरुरूपयति॥ तेनेति। तेनैव ज्ञानादिफलं प्राप्तं यः आत्मन्येव तत्त्वतो इति विशेषोपदेशः॥

तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा॥
तृप्तः स्वच्छेंद्रियो नित्यमेकाकी रमते तु यः॥१॥ न कदाचिज्जगत्यस्मिं
तत्त्वज्ञो हं न खिद्यते॥ यत एकेन तेनेदं पूर्णं ब्रह्मांडमंडलं॥ २॥ ॥

न भोगादिना अत एव स्वच्छेंद्रियो विषयानासक्तेंद्रियः सन् एकाकि विषयसंयोगं विनैव नित्यं आत्मन्येव रमते॥१॥ न कदाचिदिति॥ हे तेजिहर्षसंबोधने हे शिष्य अस्मिन् जगति कदाचिदपि तत्त्वज्ञो न खिद्यते॥ यत एकेनैव तेनेदं ब्रह्मांडमंडलं पूर्णं व्याप्तं॥ अतो द्वितीयस्याभावान्न खिद्यतीत्यर्थः॥२॥

किंचा न जातु इति। स्वस्मिन्नात्मन्ये अरमते तं स्वारामं जातु कदाचित्।
अमी विषया न हर्षयंति तुछत्वात् यथा सल्लकीपल्लवप्रीतं इभं गजं
निंबपल्लवा न हर्षयंति कटुकत्वादित्यर्थः॥३॥ किंच यस्त्विति। यस्तु भुक्ते
षु भोगेष्वासक्तो न भवति। अभुक्तेषु आकांक्षी न भवति आत्मतृप्तत्वात्

न जातु विषयाः केपि स्वारामं हर्षयंत्यमी॥ सल्लकीपल्लवप्रीतमि
वेभं निंबपल्लवाः॥३॥ यस्तु भुक्तेषु भोगेषु न भवत्यधिवासितः॥ अ
भुक्तेषु निराकांक्षी तादृशो भवदुर्लभः॥४॥ बुभुक्षुरिह संसारे मु
मुक्षुरपि दृश्यते॥ भोगमोक्षनिराकांक्षी विरलो हि महाशयः॥५॥

तादृशो भवदुर्लभः संसारकोटिष्वेक इत्यर्थः॥४॥ किंचा बुभुक्षुरिति॥
संसारे बुभुक्षुर्मुमुक्षुश्चानेकधा दृश्यते। भोगमोक्षनिराकांक्षी मह
ति पूर्णब्रह्मणि अशयोंतःकरणं यस्य स महाशयो विरलः। तदुक्तं। भग
वता यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ५

अ०

किंचाधर्मार्थेति पुरुषार्थचतुष्टये तथाजिवितमरणयोर्यथायोग्यं हेयोपा
देयतारहितोतिरल इत्यर्थः ६ वांछेति। तस्मात् ज्ञानिनो विश्वविलये प्र
पंचपरमे वांछा नास्ति तस्य प्रपंचस्थितौ च द्वेषो नास्ति अष्टधीष्टा
नत्वैनैव स्फुरणात्। तस्मात्कारणाद्धन्यो विद्वान् आधेवरं वज्ञात्वान

धर्मार्थकाममोक्षेषु जीवितमरणे तथा॥ कस्याप्युदारचित्तस्य हेयो
पादेयता नहि॥६॥ वांछा न विश्वविलये न द्वेषस्तस्य च स्थितौ॥ य
थाजिविकया तस्माद्धन्य आस्ते यथासुखं॥७॥ कृतार्थोनेन ज्ञाने
नेत्येवं गलितधीः कृती॥ पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखं॥८

या जीविकया सुखमनतिक्रम्यैवास्त इत्यर्थः॥७॥ किंच कृतार्थ इति। अहं अ
नेनाद्वैतात्मज्ञानेन कृतार्थ इत्येवं गलितधीः कृति क्षणादिकं कुर्वन्नपि सु
खमनतिक्रम्यास्ते कृतार्थत्वधियः सत्वाद्बहिरिंद्रियव्यापारे सत्यपि आज्ञानि
विरक्तवत्तस्य खेनभवतीत्यर्थः॥८॥ राम राम

तस्य मनःकोविंयोंद्रियव्यापारो वा लोल्मनत्तधि वदित्याह ॥ शून्येति ॥ क्षीणसंसा
रसागरे यस्य तस्मिन् क्षीणसंसारसागरे पुरुषे स्पृहा विषये छापि न वि
रतिर्वा विषयविरक्तिश्च न तस्य दृष्टिर्मनोव्यापारः शून्यः संकल्पविकल्पर
हितः चेष्टा कायव्यापारः वृथा फलमनुद्दिश्यैव तस्य इंद्रियाणि विकलानि
पुनः स्थितानामपि विषयाणाम निर्णायकत्वात् । तदुक्तं भगवता । यस्यांजाग्र

शून्या दृष्टिर्वृथा चेष्टा विकलानींद्रियाणि च ॥ न स्पृहा न विर
क्तिर्वा क्षीणसंसारसागरे ।९। न जागर्ति न निद्राति नोन्मील
ति न मीलति ॥ अहो परदशा कापि वर्त्तते मुक्तचेतसः ॥१०॥

तिभूतानि सा निशा पश्यतो मुनेरिति ९ न जागर्त्तीति । ज्ञानी न जागर्ति जाग्र
द्वस्थावान्न भवति अत्र बहिर्विषयाननुसंधानादिति हेतुमाह । नोन्मी
लतीति । बाह्यविषयान्नानुसंधत्ते इत्यर्थः । तथा ज्ञानी द्राति यतः न नि
मीलति जडोन्मत्तवत् । अन्यथा सर्वान् विषयान् ब्रह्मत्वेन पश्यतीत्य
र्थः । कात्तर्हि तस्य दशेत्यत आह । अहो इति । अहो इति आश्चर्ये मुक्तचेतसः
कापि अलौकिकी परदशा उत्कृष्टावस्था तुरीयातीतेत्यर्थः ॥१०॥ रामजी

इदमेव विशद यति। सर्वत्रेति। सर्वत्र सुखदुःखे च स्वस्छचित्तः तथा सर्वत्र शत्रौ मित्रे च विमलाशयः समान दर्शयितः समस्तविषयवासनाभ्यो मुक्तः सर्वत्र सर्वासु राजते दीप्यते पूर्णात्म दर्शित्वात्। ११ पश्यन्निति। आत्म

सर्वत्र दृश्यते स्वस्छः सर्वत्र विमलाशयः॥ समस्तवासनामुक्तो मुक्तः
सर्वत्र राजते॥ ११॥ पश्यन् स्पृशन् जिघ्रन्नश्नन् वदन् व्रजन्॥ इहि
तानीहितैर्मुक्तो मुक्त एव महाशयः॥ १२॥ न निंदति ~~स्तुपाहिति~~ न
च स्तौति न हृष्यति न कुप्यति न ददाति न गृह्णाति मुक्तः सर्वत्र नीरसः॥ १३

रब्धवशाद्दर्शनादिकं बहिरिंद्रियव्यापारं कुर्वन्नपि इहितानीहितैरिच्छा
द्वेषैर्मुक्तो महाशयो महति आत्मनि आशयो यस्य महाशयो मुक्त एव मनो विकारातीतत्वात्॥ १२॥ इदमेव विशद यति। न निंदति॥ स्पष्ट॥ १३

किंचासानुरागमिति। सानुरागां स्त्रियं दृष्ट्वा अथवा समुपस्थितं मृत्युं दृष्ट्वा
अविह्वलमनाः कामभयाभ्यां विमुक्तमना महाशयो मुक्त एव १४ किंचासु
खेति।१५। किंच। नहिंसेति। क्षीणसंसरणे अनरेन राभिमानरहिते विदुषि

सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितं ॥ अविह्वलमनाः स्वस्थो
मुक्त एव महाशयः॥१४॥ सुखदुःखे नरे नार्यां संपत्सु च विपत्सु चावि
शेषो नैव धीरस्य सर्वत्र समदर्शिनः॥१५॥ न हिंसा नैव कारुण्यं नौद्ध
त्यं न च दीनता। नाश्चर्यं नैव च क्षोभः क्षीणसंसरणे नरः॥१६॥ न मु
क्तो विषयद्वेष्टा न वा विषयलोलुपः। असंसक्तमना नित्यं प्राप्तं प्राप्तमु

हिंसा नाम परद्रोह इत्यादयो मनोविकारा न भवंतीत्यर्थः॥१६॥ न मुक्त
इति जीवन्मुक्त इति विषयद्वेष्टापि न च विषये लोलुपः। किं तर्हि असं
सक्तमनाः सन् प्रारब्धवशात् प्राप्तं प्राप्तं उपाश्नुते भुंक्ते इत्यर्थः॥१७

अ०

समाधानादिति। बहिः शून्यचित्तो ज्ञानी समाधानादि विविधाः कल्पनास्तान
जानाति। उपेक्षते विदेहकैवल्यं प्राप्त इव ॥१८॥ निर्मम इति अहं ममाभिमान
शून्यस्तथाधिष्ठानातिरिक्तं किंचित् न सदिति निश्चयवान्। अत एव अं
तर्गलितसर्वाशः अत एव कुर्वन्नपि न लिप्यते कर्तृत्वाभिमानरहित

समाधानासमाधानहिताहितविकल्पनाः ॥ शून्यचित्तो न जानाति कै-
वल्यमिव संस्थितः ॥१८॥ निर्ममो निरहंकारो न किंचिदिति निश्चितः। अंतर्ग-
लितसर्वाशः कुर्वन्नपि न लिप्यते ॥१९॥ मनःप्रकाशसंमोहस्वप्नजाड्य-
विवर्जितः ॥ दशां कामपि संप्राप्तो भवेद्गलितमानसः ॥२०॥ इति तत्त्वज्ञस्व-

त्वादित्यर्थः ॥१९॥ मन इति। गलितं सविशेषवृत्तिविहीनं मानसं यस्य स ज्ञानी
कामपि अनिर्वाच्यां दशां संप्राप्तो भवेत्। तदेव दर्शयति। मन इति। मनः
प्रकाशविवर्जितः सविशेषप्रकाशाभावात् तथा संमोहवर्जितः प्रत्य
क्प्रवणचित्तत्वात्। अत एव स्वप्नविवर्जितो जाड्येन सुषुप्त्या च विव
र्जितः ॥२०॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टा० तत्त्वज्ञानस्वरूपविंशतिकं॥

तत्त्वाभिव्यक्तेः फलीभूतशमस्यैव प्रधानतां। व्याख्यातुं वर्ण्यते शांतिः शांत
श्लोकैः पुनः स्फुटां तत्रतावच्छांतेः प्रधानतेति ख्यापयितुं फलीभूतां शांति
वर्णयितुकामः शांतिशालिनं नमस्करोति। यस्येति। बोधोदये सति ना

यस्य बोधोदये तावत्स्वप्नवद्भवति भ्रमः॥ त
स्मै सुखैकरूपाय नमः शांताय तेजसे॥ १॥

वत्तत्क्षणमेव प्रपंचभ्रमः स्वप्नवत्तुच्छो यस्य भवति शांतो भवतिभ
वति॥ तस्मै शांताय निवृत्तसंकल्पविकल्पाय अत एव सुखैकरूपाय
दुःखाननुविद्धसुखस्वभावाय अत एव तेजसे स्वप्रकाशापाविदुषे नमः १

अ०

ननु धनिनोपि सुखिनो दृश्यंते तत्कथं शांतसंकल्प एव सुखैकरूप इत्या
शंक्याह ॥ अर्जयित्वेति । अखिलार्थान् धनधान्यकांतादीन् अर्जयित्वा
पुष्कलान् बहुविधान् भोगान् एव अप्नोति ननु सुखैकरूप स्तत्क्षये दुः
खभागीत्वात् सर्वपरित्यागमंतरेण सर्वसंकल्पत्यागं विना सुखी सुखक

अर्जयित्वाखिलानर्थान् भोगानाप्नोति पुष्कलान् । नहि सर्वपरि
त्यागमंतरेण सुखी भवेत् ॥२॥ कर्त्तव्यदुःखमार्तंडज्वालादग्धां
तरात्मनः ॥ कुतः प्रशमपीयूषधारासारमृते सुखं ॥३॥

रूपो नहि भवेत् नैव स्यात् ननु संकल्पविकल्पयोस्तु त्यागस्तु छत्वज्ञान
मेव त्यागमात्रस्य यथा वंध्यापुत्रे तुच्छत्वज्ञानमेव त्यागः असतः त्यागा
संभवात् ॥२॥ इदमेव रूपकालंकारेण विशदयति । कर्त्तव्येति । कर्त्तव्यानि
यानि कर्माणि अर्थार्जनादीनि तानि ज्ञेतानि दुःखान्येव मार्तंडज्वाला ।
खरतरसूर्यस्तपस्तेन दग्धः अंतरात्मा मनो यस्य तस्य संकल्पप्रश
मामृतधारालक्षणं असारं सुखं कुतः स्यात् ॥३॥ रामराम रामराम राम

५५

संकल्पप्रशमस्यामृतत्वं संसाररूपविषयिवर्त्तकत्वादित्याशयेनाह

भवोयमिति। अयं भवः भावनामात्रं संकल्पमात्रप्रभवः परमार्थतआ

त्मव्यतिरिक्तं किंचिन्नास्ति परमार्थतस्तु अत्मैवभावरूपः। ननु अभा

वरूपोपि प्रपंचः कालादिवशात् भावस्वाभाव इत्याशंक्याह नास्तीति

भवोयंभावनामात्रो न किंचित्परमार्थतः॥ नास्त्यभावः स्व

भावानां भावाभावविभाविनां॥४॥ ॥ ॥ ॥ ॥

भावाभावेषु विभाविनां स्थितानां स्वभावानां अभावो नास्ति नहि उष्णस्व

भावो वन्हिः कदाचिदपि शीतलस्वभावो दृष्टः तथा च मनोराज्यवद्भा

वनामात्रसिद्धोऽसत्स्वभावः प्रपंचो भावनानिवृत्तौ निवर्त्तत इति सं

कल्पप्रशमः संसारविषतापापहत्वामृतप्राप्तिहेतुत्वादमृतमिति भावः ४

ननु संकल्पो परममात्रेण कथमात्मामृतप्राप्तिरित्याशंक्य तस्य नित्यप्रा
प्तत्वमाह। न दूरमिति। आत्मनः पदं स्वरूपं दूरं नास्ति नापि संकोचाद्गतं।
परिछिन्नं नास्ति परिपूर्णत्वात्। अतएवात्मनः पदं नित्यं लब्धं प्राप्तमे
वास्ति संकल्पवशात्पुनरप्राप्तमिव विद्वांसो मन्यंते कंठगजचामीकरवत्

न दूरं न च संकोचाल्लब्धमेवात्मनः पदं॥ निर्वि
कल्पं निरायासं निर्विकारं निरंजनं॥५॥ राम

कीदृशं पदं। निर्विकल्पं विकल्पातीतं विकल्पाभावगम्यं वा। तथा निराया
सं आयासातीतं तदभावगम्यं वा निर्विकारं विकारातीतं निरंजनं उपाधि
मक्तृश्न्यां कथं तर्हि तत्वज्ञाने न तत्प्राप्तिव्यवहारः शास्त्रकाराणामि
त्याशंक्य भ्रांतिनाशमात्रावेदत्याह॥५॥ श्रीरामरामरामरामरामराम

व्यामोहेति। ज्ञानेन निरावरणदृष्टयः अविद्यानावृतदृष्टयः व्यामोहमा
त्रस्य प्रपंच भ्रांतिमात्रस्य विरतौ सत्यां स्वरूपादानमात्रतः आत्मविश्रां

व्यामोहमात्रविरतौ स्वरूपादानमात्रतः॥ वितशोका विराजंते नि
रावरणदृष्टयः॥६॥ समस्तं कल्पनामात्रमात्मा मुक्तः सनातनः
इति विज्ञाय धीरो हि किमभ्यस्यति बालवत्॥७॥ रामकृष्ण

तिमात्रतो वितशोका विराजते सर्वदा स्वभावेनैव पूर्णाऽद्वितीयतयाऽप्रका
श्यंत इत्यर्थः। आत्मज्ञानरहस्यमाह। समस्तमिति। स्पष्टार्थमिदं॥७॥

समस्तकल्पनामात्रमितिज्ञानस्यनिदानभूतंतत्त्वंपदार्थैक्यज्ञानमाह॥आ
त्मेति।आत्मात्वंपदार्थः ब्रह्मतत्पदार्थाभिन्नइतिनिश्चित्यअधिष्ठानसाक्षा
त्काराच्चभावाभावौघटादितदभावौकल्पितावितिनिश्चित्यतथाचस

आत्माब्रह्मेतिनिश्चित्यभावाभावौ
चकल्पितौ॥निष्कामःकिंविजाना
तिकिंब्रूतेचकरोतिकिं॥८॥राम

र्वस्यतुच्छत्वानुसंधानात्कामहेत्वविद्याविलयाच्चनिष्कामःसन्किंवि
ष्टतयाजानातिकिंब्रूतेकिंचकार्यंकरोतिकर्तृत्वाभिमानरहितत्वा
त्ज्ञातापिनवक्तापिनक्रियाकर्तापिनेत्यर्थः॥८॥रामरामराम।

सर्वमात्मेतिज्ञानेनसर्वविकल्पनाविवर्तकमित्याह। अहमिति। सर्वमात्मेति
निश्चित्य अनुभय तूष्णिंभूतस्य निवृत्तपरावाव्यापारस्य पुंसइतिविवि
धाःकल्पनाःक्षीणाभवंति। इतीति। अहंकारोमि। यएवाहं पूर्वदिनेव्र

अहंसोहमयंनाहमितिक्षीणाविकल्पनाः। सर्वमात्मेतिनि
श्चित्यतूष्णीभूतस्ययोगिनः॥९॥ नविक्षेपोनचैकाग्र्यं नातिबो
धोनमूढता॥ नसुखंनचवादुःखमुपशांतस्ययोगिनः॥१०

तमकरवंसोहं। अस्मामि। अयंदेवदत्तोगच्छतिनाहंगमिष्यामित्यादयः
कल्पनाःक्षीणाभवंतीत्यर्थः।९। निवृत्तकल्पस्वरूपमाहद्वाभ्यां। नविक्षे
पइति। उपशांतविकल्पस्ययोगिनःविक्षेपोव्यग्रतानएकाग्र्यादिकमपि
नेत्यर्थः॥१०

निर्विकल्पस्वभावस्यनविशेषोस्तीयोगिनः।स्वाराज्येति।स्वाराज्येभैक्षवृत्तौ
चमाद्यवस्तुलाभेजनेजनसमूहेविजनेवनेचविशेषोयोगिनोनास्ति
कीदृशस्यनिर्विकल्पस्यविकल्परहितस्वभावस्येत्यर्थः।११।किंच।स्वध

स्वाराज्यभैक्ष्यवृत्तौचवस्तुलाभेजनेवने।।विजननिर्विकल्प
स्यविशेषोनैवयोगिनः।।११।।क्वधर्मःक्वचवाकामःक्वचार्थ
क्वविवेकिता।।इदंकृतमिदंनेतिद्वंद्वैर्मुक्तस्ययोगिनः।।१२।।

र्मेइति।इदंकृतमिदंनकृतमित्यादिद्वंद्वैर्मुक्तस्ययोगिनःधर्मार्थकामाःविवे
किता।मोक्षोपायभूतोविवेकश्चनभवति।तन्मूलभूतविद्याकामसंक
ल्पादिविनाशादित्यर्थः।।१२।।

कथं तर्हि जीवन्मुक्तस्य लोके क्रियेत्याशंक्य जीवनादृष्टवशादेवेत्याह। कृ
त्यमिति। जिवन्मुक्तस्य योगिनः संकल्पवशात्किमपि कृत्यं नास्ति तथा
हृदि मनसि पिरंजना कोपि अनुरागो नास्ति तद्धेतुभूताविद्याया अ
भावात्। तथापि अस्य कृत्यं यथा जीवनं जीवनादृष्टमनतिक्रम्य भव

कृत्यं किमपि नैवास्ति न कापि हृदि रंजना॥ यथा जीवनमेवे
ह जीवन्मुक्तस्य योगीनः॥१३॥ क्व मोहः क्व च वा विश्वं क्व त
ध्यानं क्व मुक्तता॥ सर्वसंकल्पसीमायां विश्रांतस्य महात्मनः॥१४

तीत्यर्थः॥१३॥ क्व मोह इति। संकल्पसीमायामात्मबुद्धौ विश्रांतस्य मोहा
दिकं क्व भवति किं कारणमाश्रित्य भवति किमपि कारणमाश्रित्य भवति
आत्मबुद्ध्या कारणोपमर्दादित्यर्थः॥१४॥ श्रीराम जय राम जय जय राम

अ०

येनेति। येन इदं विश्वं घटपटादि दृष्टं सद्घटस्मरणऽऽहितसंस्कारः कदाचि
त् घटादिकं नास्तीति जानातु यः। पश्यन्नपि न पश्यति स निर्वासनः सन् किं कु
रुते यद्विषयः संस्कारोऽपि नास्ति तस्य कर्तुमशक्यत्वादित्यर्थः॥१५॥ येन परं

येन विश्वमिदं दृष्टं स नास्तीति करोतु वै॥ निर्वासनः किं कु
रुते पश्यन्नपि न पश्यति॥१५॥ येन दृष्टं परं ब्रह्म सोऽहं ब्रह्मे
ति चिंतयेत्॥ किंचितयति निश्चिंतो द्वितीयं यो न पश्यति॥१६

व्यतिरिक्तं ब्रह्म दृष्टं सः अहं ब्रह्मेति चिंतयेत्। यस्तु द्वितीयं न पश्यति
स निश्चितः सर्वचिंतारहितः सन् किंचित्तयति न किमपि चिंतयति अद्विती
यात्मानुभवशालीनि ब्रह्मचिंतनमपि नास्तीत्यर्थः।१६॥ रामजपरामज

५९

त्तानि नश्चित्तनिरोधोपि नास्तीत्याह।।दृष्टइति। येन अत्मविक्षेपश्चित्तादि
भ्रमो दृष्टः असोपुरुषश्चित्तनिरोधं कुरुते विक्षेपपरिहारार्थं उदारः सर्व
त्राद्वितीयात्मदर्शी तु विक्षिप्त एव नास्ति सविक्षेपपरिहारपरिहारल
क्षणस्वभावात्किं कुरुते। कथं निरोधं कुरुते इत्यर्थः।।१७।।इदमेवव
दृष्टो नैयैत्मविक्षेपो निरोधं कुरुते त्वसौ।। उदारस्तु न विक्षिप्तः
साध्याभावत्करोति किं।।१७।।धीरो लोकविपर्यस्तो वर्तमा
नोपि लोकवत्।।न समाधिं न विक्षेपं न लेपं स्वस्य पश्यति १८
णोति। धीर इति। धीरः अद्वितीयात्मविश्रांतः लोकाविपर्यस्तः लोकेषु
विक्षेपरहितः प्रारब्धवशात् लोकवत् वर्त्तमानोपि बाधितानुवृत्याव्य
वहारपरोपि सन् अयं समाधिरयं विक्षेपस्तथा अयं विक्षेपकृतो ले
प अत्मन इत्यादि कं न पश्यति चिन्मात्रदर्शित्वात्।।१८।।राम जप

भावाभावेति। यो बुधस्तृप्तः स्वात्मानुभवतृप्तः अत एव भावाभावविकारस्फूर्तिविहीनः। अत एव निर्वासनस्तेन लोके दृष्ट्या कुर्वतापि किंचिदपि नैव कृतं स्यात्॥ अकर्तृत्वात्मज्ञानेन कर्तृत्वाध्यासबाधादित्यर्थः॥१९॥ इदमेव विशदयति। प्रवृत्तौ वेति। धीरस्यात्मविश्रांतस्य

भावाभावविहीनो यस्तृप्तो निर्वासनो बुधः॥ नैव किंचित्कृतं तेन लोकदृष्ट्यापि कुर्वता॥१९॥ प्रवृत्तौ वा निवृत्तौ वा नैव धीरस्य दुर्ग्रहः॥ यदा यत्कर्तुमायाति तत्कृत्वा तिष्ठतः सुखं २०

प्रवृत्तौ वा निवृत्तौ वा दुर्ग्रहः दुराग्रहः॥ कर्तृत्वाभिमानो नास्ति। कीदृशस्य धीरस्य प्रारब्धवशाद्यदा यत्प्रवृत्तं वा निवृत्तं वा निवृत्तं वा कर्तुमायाति तत्सुखमनायासं यथा स्यात्तथा कृत्वा तिष्ठतः अतः कर्तृत्वाभिमानाभावात्ज्ञानिना कृतमकृतमेवेत्यर्थः॥२०॥ श्रीरामराम

ननु ज्ञानी चेन्निर्वासनस्तर्हि केन प्रयुक्तः कर्म करोतीत्याह। निर्वास
न इति। निर्वासनः। अत एव निरालंबः कर्त्तव्याकर्तव्यानुसंधानरहि
तः अत एव स्वच्छंदः रागद्वेषाऽनधीनः यतो मुक्तबंधनः बंधहेतुरज्ञा
नशून्यः। ज्ञानी संस्कारवातेन क्षिप्तः प्रारब्धप्रेरितः सन् शुष्कपर्ण
वत्तच्चेष्टते। २१। संसारविकल्पादिशून्यस्तु सर्वदा संतुष्ट एवेत्याह।

निर्वासनो निरालंबः स्वच्छंदो मुक्तबंधनः॥ क्षिप्तः संस्कारवा
तेन चेष्टते शुष्कपर्णवत्॥ २१॥ असंसारस्य तु क्वापि न हर्षो न
विषादता॥ स शीतलमना नित्यं विदेह इव राजते॥ २२॥ राम

असंसारस्येति। न विद्यते संसारहेतुः संकल्पो यस्य तस्य असंसारस्य
हर्षादिका ऊर्मयो न जायंते अत ऊर्मिरहितत्वान्नित्यं शीतलमना वि
देहमुक्त इव राजते षडूर्मिरहितः शिव इति स्मृतेः॥ २२॥ [illegible]

किंच। कुत्रापिति। आत्मरामस्य अतएव धीरस्य निश्चलचित्तस्य अतएव शीतलः अतरः आत्मनो यस्य तस्य शीतलाछ्छतरात्मनः ज्ञानिनः कुत्रापि जिहासा त्यागेछ्छा नास्ति उपादेयेछ्छापि नास्ति रागद्वेषाभावात् नाशोपि अनर्थोपि कुत्रचिन्नास्ति अनर्थहेतोरज्ञानस्याभावादित्यर्थः

कुत्रापि न जिहासास्ति नाशो वापि न कुत्रचित्। आत्मरामस्य धीरस्य शीतलाछ्छतरात्मनः ॥२३॥ प्रकृत्या चित्तशून्यस्य कुर्वतोस्य यदृछ्छया। प्राकृतस्येव धीरस्य न मानो नावमानता ॥२४॥ कृतं देहेन कर्मेदं न मया शुद्धरूपिणा ॥ इति चिंतानुरोधि यः कुर्वन्नपि करोति न ॥२५॥

२४ प्राकृत्येति। प्राकृत्या स्वभावेन विकाररहितं चित्तं यस्य तस्य धीरस्य आत्मविज्ञं तस्य प्राकृतस्येव अज्ञानिरवयदृछ्छया प्रारब्धवशात्कुर्वतः अस्य विदुषः मानापमानानुसंधानं नास्तीत्यर्थः ॥२४॥ कृतं देहेनेति। इति चिंता। अनुरुध्यते निरंतरं अयति स कुर्वन्नपि न करोति कर्तृत्वाभिमानाभावादित्यर्थः २५

अतद्वादिति॥जीवन्मुक्तः अतद्वादीव अहमिदं करिष्यतीत्यवदन्नेवका
र्यं कुरुते प्रारब्धवशात्॥ अवदन्नापि वालिशो मूर्खो न भवेत् अतर्ज्ञानि
त्वात्॥ अतएव संसरन्नपि संसारव्यवहारं कुर्वन्नपि अंतस्सुखी अत
श्रीमान् प्रसन्नतया शोभावान् अतएव शोभते दीव्यते स्वप्रकाशः२६

अतद्वादीव कुरुते न भवेदपि वालिशः॥ जीवन्मुक्तः सुखी
श्रीमान् संसरन्नपि शोभते॥२६॥ नानाविचारसुश्रांतो धी
रो विश्रांतिमागतः॥ न कल्पते न जानाति न शृणोति न पश्यति २७

त्यर्थः॥ नानेति॥ नानाविचारात् द्वैतविचारात् सुश्रांतः उपनिवृत्तोय
तो धीरो ज्ञानी अतएवमात्मन्येव विश्रांतिमतः अतएव न कल्पादिकं मनो
व्यापारं न करोति न जानाति बुद्धिव्यापारं न करोति शब्दं न शृणोति रूपं
न पश्यति इंद्रियमात्रव्यापारं न करोति कर्तृत्वाभिमानाभावादित्यर्थः२७

असमाधेरिति ज्ञानिमुमुक्षुर्न भवति॥ असमाधेः समाधेरकरणात् तथाह
तवद्धो न अविक्षेपात् द्वैतभ्रमाभावादित्यर्थः॥ कीदृशस्तर्हि ज्ञानीत्याशंक्या
हा निश्चित्येति॥ इदं सर्वं कल्पितमिति पूर्वमेव निश्चित्य पश्चाद्बाधितानु
वृत्त्या पश्यन्नपि महाशयो निर्विकारचित्तः॥ अतएव ब्रह्मैव आस्ते २८

असमाधेरविक्षेपान्न मुमुक्षुर्न चेतरः॥ निश्चित्य कल्पितं
पश्यन् ब्रह्मैवास्ते महाशयः॥२८॥ यस्यांतः स्यादहंकारो न
करोति करोति सः॥ निरहंकारधीरेण न किंचित्कृतं कृतं २९

ननु संसारं पश्यंश्चेत्कथं ब्रह्मेत्याशंक्याहंकाराभावादित्याह॥ यस्येति॥
यस्यांतष्करणे अहंकाराध्यासात् स लोकदृष्ट्या न कुर्वन्नपि संकल्पादिकं
करोति कर्तृत्वाध्यासात् निरहंकारेण अतएव धीरेण कर्तृत्वाध्यास
रहितेन यद्यपि लोकदृष्ट्या कृतं तथापि स्वदृष्ट्या न किंचिदपि कृतं कर्तृत्वा
ध्यासाभावादित्यर्थः २९

मुक्तचित्तं वर्णयति द्वाभ्यां। नोद्विग्नमिति। मुक्तस्य चित्तं राजते केवलप्रका
शरूपमेवायतो नोद्विग्नं उद्वेगहेतो द्वेषस्याभावान्न च संतुष्टं संतोष
हेत्वनुरागाभावः तत्तथा अकर्तृ तथा स्पंदवर्जितं। संकल्पविकल्प
न्यअत एव निराशांगताः संदेहा यस्मात्तत् गतसंदेहं संदेहहेतोरज्ञान

नोद्विग्नं न च संतुष्टमकर्तृस्पंदवर्जितं। निराशंगतसंदेहं चि
त्तं मुक्तस्य राजते॥ ३०॥ निर्ध्यातुं चेष्टितुं वापि यच्चित्तं न प्रव
र्तते॥ निर्निमित्तमिदं किंतु निर्ध्यायति विचेष्टते॥ ३१॥ राम

नैस्येष्टत्वादित्यर्थः॥ ३०॥ निर्ध्यातुमिति। यस्य ज्ञानिनः चित्तं निर्ध्यातुं चेष्टि
तुं चेष्टां कर्तुं वापि न प्रवर्तते न संकल्पयति। किंतु इदं ज्ञानिनश्चित्तं नि
र्निमित्तं संकल्परहितमेव सत् निर्ध्यायति निश्चलं स्वरूपं तिष्ठति तथा
विचेष्टिते विविधां चेष्टां करोतीत्यर्थः॥ ३१॥ श्रीरामकृष्ण गोविंदमंज

अ०

ज्ञान्यज्ञानिनोर्विशेषं वदन्नेव ज्ञानिनां विरलत्वमाह। तत्त्वमिति ।। मंदः अ
ज्ञानी यथार्थं तत्त्वं पदार्थभेदं श्रुतेराकर्ण्य असंभावनाविपरीतभावनाभ्यां
मूढतां अविवेकं प्राप्नोति। अथवा शास्त्रार्थसाक्षात्काराय संकोचं चित्तस
माधिं आयाति ।। कोपि सत्त्वेष्वेक अंतरसंमूढो बाह्यगत्या मूढवत् बहिर्व्य
वहारकर्त्ता भवति ।।३२।। अथवा याति संकोचमित्यनेनोक्तावेकाग्रतानि

तत्त्वं यथार्थमाकर्ण्य मंदः प्राप्नोति मूढतां ।। अथवा याति संकोच
ममूढः कोपि मूढवत् ।।३२।। एकाग्रता निरोधो वा मूढैरभ्यस्य
ते भृशं ।। धीराः कृत्यं न पश्यंति सुप्तवत्स्वपदे स्थिताः ।।३३।।

रोधौ दूषयति। एकाग्रेति। एकाग्रता एकलक्ष्यनिष्ठचित्तता अथवा निरो
धः चित्तविलयो मूढैरनुत्पन्नात्मसाक्षात्कारैर्विपरीतभावनानिवृत्यर्थं
भृशमत्यर्थमभ्यस्यते सुप्तवत्सुषुप्तवत् देहात्मधीरा हित्येन स्वपदे स्व
रूपे स्थिता धीरा ज्ञानीनस्तु प्रागुक्तं किमपि कृत्यं न पश्यंति अद्वैतानं
दात्मसाक्षात्कारेणैवानंदादिभ्रमस्य दूरापास्तत्वादित्यर्थः ।।३३।। रामजी

६३

निरोधस्याकिंचित्कारतामाह॥अप्रयत्नादिति॥मूढःपुरुषःप्रयत्नाचित्तनिरोधादप्रयत्नात्कर्मानुष्ठानाद्वानिर्वृत्तिंपरमंसुखंनप्राप्नोतिअनंदहेतोरात्मानंदानुभवादित्यर्थः प्राज्ञस्तुसमाधिकर्मवाकुर्वन्तत्वनिश्चयमात्रेणकृतार्थोभवतिदुःखहेतोरज्ञानस्यज्ञानदग्धत्वादित्यर्थः३८

अप्रयत्नात्प्रयत्नाद्वामूढोनाप्नोतिनिर्वृतिं॥तत्वनिश्चयमात्रेण
प्राज्ञोभवतिनिर्वृतः॥३८॥शुद्धंबुद्धंप्रियंपूर्णंनिष्प्रपंचंनि
रामयं॥अत्मानंनविजानंतितत्राभ्यासपराजनाः॥३९॥

ना[illegible]योगाभ्यासादात्मानुभवोभविष्यतीत्याशंक्यतत्राह॥शुद्धमिति॥तत्रजगतीअभ्यासपराजनाःअज्ञानिनअत्मानंनजानंतिकीदृशंशुद्धंमायामलातितंअतएवबुद्धंस्वप्रकाशंप्रियंसुखरूपंपूर्णंयितोनिःप्रपंचंअतएवनिरामयंदुःखसंबंधरहितं॥३९॥

इदमेव वृणोति। नाप्नोतीति॥ विमूढो अनात्मज्ञः अभ्यासरूपीणा यो
गाभ्यासात्मकेन कर्मणा मोक्षं नाप्नोषि। न कर्मणा न प्रजया न धनेने
ति श्रुतेः। धन्यो भाग्यवान् विरलो विज्ञानमात्रेण अविक्रियो निरस्ता
विद्याकामकर्मा स एव मुक्तातिष्ठ निरूढ॥ मुमुक्षुरपि मूढो ब्रह्म नाप्नोती

नाप्नोति कर्मणा मोक्षं विमूढोभ्यासरूपिणा॥ धन्यो विज्ञान
मात्रेण मुक्तस्तिष्ठत्यविक्रियः॥ ३६॥ मूढो नाप्नोति तद्ब्रह्म यतो
भवितुमिच्छति॥ अनिच्छन्नपि धीरो हि परब्रह्मस्वरूपभाक्॥ ३७॥

स्यात्॥ मूढ इति॥ मूढ अज्ञानी यतः चित्तनिरोधाद् ब्रह्म भवितुमिच्छति
ततो ब्रह्म नाप्नोति। हि निश्चितं। धीरो ज्ञानी अनिच्छन्नपि मोक्षमनिच्छन्न
पि परब्रह्मस्वरूपभाक् व्यवधायकाज्ञानस्य निवृत्तत्वादित्यर्थः॥ ३७॥

एतदेवस्पष्टयति।निराधेति।मूढा अज्ञानिनस्तु राधाराग्रहव्यग्याः कै
वलेन चित्तनीरोधैनैवव यंमोक्ष्याम इति निष्कारणदुराग्रह व्यग्राः प्रस्फ
तं संसार पोषकाः संसार निवर्त्तक ज्ञान परांमुखत्वात् बुधैः ज्ञानिभिः
अनर्थमूलस्य एतस्य संसारस्य मूलछेदः कृतः संसारमूलभूतस्याज्ञानस्य
निराधाराग्रहव्यग्रा मूढाः संसार षोषकाः॥ एतस्यनर्थमूलस्य
मूलछेदः कृतो बुधैः॥३८॥ न शांतिलभते मूढो यतः शमितु
मिछति॥ धीरस्तत्वं विनिश्चित्य सर्वदा शांतमानसः॥३९॥ राम
ज्ञानेन निवृत्तत्वादित्यर्थः॥३८॥ न शांतिमिति॥ मूढः अज्ञानी यतश्चित
निरोधादेशमितुमिछति ततः शांतिं न लभते। धीरो विवेकितत्वं विनि
श्चित्य शमितुमनिछन्नपि स्वभावादेव सर्वदा शांतमानसो भवति जगतो
विकारहेतोरज्ञानस्य निर्वृत्तत्वादित्यर्थः॥३९॥ राम राम राम राम राम

अ०

क्व आत्मन इति॥ यद्दृष्टं यस्य दृष्टं ज्ञानं अवलंबते दृश्यं विषयी करोतितस्य
आत्मनो दर्शनं क्व न कापीत्यर्थः। धीरा ज्ञानिनस्तं तंतिमिर प्रदीपनादि
कं दृश्यपदार्थं न पश्यंति किंतु चिद्रूपमात्मानं पश्यंति॥ ४०॥ क्वेति। यः अ
ज्ञानी शुष्कचित्तनिरोधेनिर्बिंधं करोति तस्य विमूढस्य क्व चित्तनिरोधः

क्वात्मनो दर्शनं तस्य यद्दृष्टमवलंबते॥ धीरांस्तं तं न पश्यं
ति पश्यंत्यात्मानमव्ययं॥ ५०॥ क्व निरोधो विमूढस्य यो निर्बं
धं करोति वै॥ स्वारामस्यैव धीरस्य सर्वदासावकृत्रिमः॥ ५१॥

न क्वापि अज्ञानिनो समाधापगमेषु नश्चित्त प्रसरात् स्वारामस्य आत्मा
रामस्यैव अतएव निश्चल चित्तस्य सर्वदा असौ चित्तनिरोधः अकृत्रि
मः स्वाभाविकः सर्वदा स्वात्मानुभव शालीत्वात्॥ ५१॥ श्रीरामराम।

भावस्येति। कश्चित्तार्किकादि भावस्य भावकः भावरूपपरमार्थः सत्प्र
पंचइति भावयति मन्यते इति भावकः। अपरः शून्यावादि बौद्धः नकि
चिदस्तीति भावयतीति न किंचिद्भावकः कश्चित्सहस्रेष्वेव कश्चिदा
त्मानुभवशाली उभयाभावकः सन्नएव उभयाभावनेनैव निराकु

भावस्य भावकः कश्चिन्न किंचिद्भावको परः। उभयाभावकः
कश्चिदेवमेव निराकुलः॥४२॥ शुद्धमद्वयमात्मानं भाव
यंति कुबुद्धयः॥ न तु जानंति संमोहाद्यावज्जीवमनिर्वृताः ४३

लः स्वस्थचित्तअस्तीत्यर्थः॥४२॥ नकिंचिद्विश्वपि चिंतयत्। भगवद्वच
ने सिद्धांतमभिप्रेत्याह शुद्धेति। कुबुद्धयो मन्दबुद्धयः एवं शुद्धं निर्म
लं अद्वयं द्वैतवर्जितं॥ आत्मानं अनन्तशीलं व्यापकं भावयंति चिंतयं
ति न तु जानंति साक्षात्कुर्वंति कुतः संमोहात् निर्मलत्वस्य कल्पितम
लसापेक्षत्वाद्वयस्य कल्पितद्वैतसापेक्षत्वात् आत्मत्वस्य च कल्पिता
नात्मत्वसापेक्षित्वात्सापेक्षरूपचिंतनेन तु मोहानिवृत्तेः। यतो न जानं
ति। अतएव यावज्जीवमनिर्वृताः परमसंतोषरहिताः संतोषस्य ज्ञानैक लभ्यत्वादिति॥४३॥

इदमेव विदग्राय ति।मुमुक्षोरिति।मुमुक्षोरनधिगतात्मसाक्षात्कारस्य बुद्धिः सविशेषालंबनमंतरेण न विद्यते साक्षात्काराभावात्मुक्तजीवस्य जीवन्मुक्तस्य अतएव मुक्तावपि निष्कामा बुद्धिः सर्वदा निरालंबैव निर्विशेषआत्मानुभवरूपैव सविशेषादि परित्यागा वात्मानुभवः॥४४॥

मुमुक्षोर्बुद्धिरालंबमंतरेण न विद्यते॥निरालंबैव निष्का
मा बुद्धिर्मुक्तस्य सर्वदा॥४४॥विषयद्वीपिनो विक्ष्य चकिताः
शरणार्थिनः॥विशंति झटिति क्रोडं निरोधैकाग्र्यसिद्धये ४५

निरोधोपि विषयस्फूर्ति चकितैरेवानुष्ठीयते न तु विज्ञैरित्याह॥विषयेति।विषयद्वीपीनो विषयव्याघ्रान्वीक्ष्य शार्दूलद्वीपीनो व्याघ्र इत्यमरः भीताः शरणार्थिनः स्वात्मरक्षणार्थिनो मूढा एवा निरोधसिद्धये ए कलक्ष्यवृत्तिसिद्धये वा हरि निशी घ्रं क्रोडं कंदरांतः प्रदेशं विशंति न तु ज्ञा
निन इत्यर्थः४५

वासनात्यागरूपविषयभयनिवृत्तिहेतुरित्याह॥ निर्वासनेति॥ निर्वासनो
यः पुरुषः तल्लक्षणं हरिं सिंहं दृष्ट्वा विषयदंतिनो नशक्ताः संतं तूष्णीं
मौनं यथास्यात्तथा पलायंते कृतचाटवः कृतप्रियवचनाः इव तं निर्वा
सनं ईश्वराकृष्टाः स्वयमागत्य सेवंत इत्यर्थः॥४६॥ नमुक्तीति॥ निःशं

निर्वासनं हरिं दृष्ट्वा तूष्णीं विषयदंतिनः॥ पलायंते नशक्तास्ते
सेवंते कृतचाटवः॥४६॥ नमुक्तिकारिकां धत्ते निःशंको युक्त
मानसः॥ पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखं॥४७

कोगतसंशयः अतएव युक्तमानसो निश्चलमानसः ज्ञानि मुक्तिकारिकांय
मनियमादिक्रियां आग्रहान्नधत्ते किं तर्हि कर्तृत्वाध्यासरहितत्वाद्यथा
सुखं आत्मसुखं अनतिक्रम्य लोकदृष्ट्या ईक्षणादिक्रियां कुर्वन्नास्ते इत्यर्थः॥४७

अ०

वस्त्विति। वस्तु न कश्चिदात्मनः श्रवणमात्रेण जानाति। यः शुद्धबुद्धिः अखंडात्म
साक्षात्कारतो निराकुलः स्वरूपस्थः पुरुषः आचारं क्रियानुष्ठानं अ
नाचारं नैःकर्म्यं उभयत्रापि नारस्थ्यं वा। एतत्त्रयमपि नैव प्रपश्यति अ
त्मस्थत्वादित्यर्थः॥४८॥ दयेति यदा यत्तच्छुभं नैष्कर्म्यं वा अशुभं कर्म

वस्तुश्रवणमात्रेण शुद्धबुद्धिर्निराकुलः॥ नैवाचारमनाचारमौदा
स्यं वा प्रपश्यति॥४८॥ यदा यत्कर्तुमायाति तदा तत्कुरुते ऋजुः॥ शुभं
वाप्यशुभं वापि तस्य चेष्टा हि बालवत्॥४९॥ स्वातंत्र्यात्सुखमाप्नोति
स्वातंत्र्याल्लभते परं॥ स्वातंत्र्यान्निर्वृत्तिं गच्छेत्स्वातंत्र्यात्परमं पदम्॥५०॥

वा कर्तुमायाति तल्लोकदृष्ट्या प्रारब्धवशात्कुरुते ऋजुराग्रहरहितः॥
हि यतः कारणात्तस्य चेष्टा बालवत् प्रारब्धमात्रा रागद्वेषानाधीनता॥
४९॥ स्वातंत्र्यादिति॥ स्वातंत्र्याद्रागद्वेषानाधीनत्वात्सुखं मनःप्रसादमा
प्नोति परतः स्वातंत्र्यात्परं ज्ञानं प्राप्नोति। तथा स्वातंत्र्यात् निर्वृत्तिं नित्यसु
खं गच्छेत् प्राप्नुयात्। अतएव स्वातंत्र्यात्परमं पदं स्वरूपविश्रांतिं गच्छेत्॥५०॥

६७

अकर्तृत्वमिति। यदा स्वात्मनः अकर्तृत्वं मन्यते तदा समस्ताश्चित्तवृत्तयः क्षी
णा भवंत्येवं वा अमुकं कर्माहं करिष्यामि अमुकं मे भोग्यं भवतु इत्यादि चि
त्यवृत्त्यनुदये तज्ज्ञान्यान्यासामपि चित्तवृत्तिना मनुदयादित्यर्थः॥५१॥
उच्छृंखलेति। धीरस्य गतस्पृहस्य अकृत्रिका अकृत्रिमा उच्छृंखलापि
शांति रहितापि स्थितीः शोभते। सस्पृहचित्तस्य मूढस्य तु कृत्रिमा शांति
अकर्तृत्वमभोक्तृत्वं स्वात्मनो मन्यते यदा॥ तदा क्षीणा भवंत्येव सम
स्ताश्चित्तवृत्तयः॥५१॥ उच्छृंखलाप्यकृतिका स्थितिर्धीरस्य राज
ते॥ न तु सस्पृहचित्तस्य शांतिर्मूढस्य कृत्रिमा॥५२॥ विलसंति महाभो
गैर्विशंति गिरिगह्वरान्॥ निरस्तकल्पना धीरा अबद्धा मुक्तबुद्धयः॥५३॥
न शोभते इत्यर्थः॥५२॥ निरस्तकल्पनानं ज्ञानिनां तु भोगत्यागयोरप्यनाग्र
ह इत्याह। विलसंतीति। निरस्तकल्पना धीरा ज्ञानिनः कदाचित्प्रारब्धव
शान्महाभोगैर्विलसंति क्रीडंति कदाचित्प्रारब्धवशात् गिरिगह्वरान्प
र्वतवनानि विशंति कीदृशाः अबद्धा आसक्तिरहिताः यथोक्तबुद्धयः। कर्तृ
त्वाध्यासरहितबुद्धय इत्यर्थः॥५३

३०

श्रोत्रियमिति। धीरस्य ज्ञानिनः श्रोत्रियदेवतातीर्थपूजने सति हृदि कापि वास
ना धर्मार्थकामवासना न जायते। अंगनां भूपतिं प्रियं पुत्रादिकं च दृष्ट्वा का
पि काम्यपदार्थवासना न जायते सर्वत्र समबुद्धित्वादित्यर्थः॥५४॥ भृत्यैरिति
भृत्यादिभिर्विहस्य उपहस्य धिक्कृतस्तिरस्कृतो योगी मनाक् किंचिद

श्रोत्रियं देवतां तीर्थमंगनां भूपतिं प्रियं॥ दृष्ट्वा संपूज्य धीरस्य न का
पि हृदि वासना॥५४॥ भृत्यैः पुत्रैः कलत्रैश्च दौहित्रैश्चापि गोत्रजैः॥ वि
हस्य धिक्कृतो योगी न याति विकृतिं मनाक्॥५५॥ संतुष्टोपि न संतु
ष्टः खिन्नोपि न च खिद्यते॥ तस्याश्चर्यदशां तां तां तादृशा एव जानते॥५६

पि विकृतिं चित्तक्षोभं न याति रागद्वेषहेतोर्मोहस्याभावादित्यर्थः॥५५॥ संतु
ष्ट इति लोकदृष्ट्या संतोषादियुक्तोपि वस्तुतः। तद्रहितः तस्य ज्ञानिनस्ता
ताम् आश्चर्यदशां तादृशा एव ज्ञानिन एव जायते॥५६॥ श्रीराम भज राम

कर्त्तव्याताकर्त्तव्यतैवममेदंकर्त्तव्यमितिकार्यसंकल्पएवसंसारस्तद्धेतु
त्वात्॥सूरयोज्ञानिनस्तांकर्त्तव्यतांनपश्यंति संकल्पयंतिसंकल्पमात्रर
रयः हितत्वात्॥कीदृशाःसू[illegible]शून्येसर्वकार्य्यक्षयेतथावर्त्तमानघटाद्या
कारेतथानिराकारेअव्याकृतेनिर्विकारासमासमात्मदर्शिनः॥अतए
कर्त्तव्यतैवसंसारोनतांपश्यंतिसूरयः॥शून्याकारनिराकारनि
र्विकारानिरामयाः॥५७॥अकुर्वन्नपिसंक्षोभाद्व्यग्रःसर्वत्रमूढ
धीः॥कुर्वन्नेतुकृत्यानिकुशलोहिनिराकुलः॥५८॥रामरामजप
वनिरामयाःसंकल्पोपल्लवरहिताइत्यर्थः॥५७॥अकुर्वन्नपीति॥अकु
र्वन्नपिमूढधीःसर्वत्रशून्याकारनिराकारेषुसंक्षोभात्संकल्पाद्व्यग्रोभ
वति॥लोकदृष्ट्याकृत्यानिकुर्वन्नपिकुशलोविद्वान्हिनिश्चितंनिराकुल
निश्चलचित्तःआत्मारामत्वात्॥५८॥भजगोविंदंभजगोविंदंगोविंदं

अ०

सुखमिति। प्राक्तनवशाद्व्यवहारेपि जायमाने शांतधीरात्मनिष्ठबुद्धि
र्विद्वानु अत्मसुखमनतिक्रम्यैव अस्ते उपविशति शेते आयाति गच्छ
ति वक्ति भुंक्ते सर्वेंद्रियव्यापारं कुरुत इत्यर्थः॥५९॥ ननु ज्ञानिनोपि व्यव

सुखमास्ते सुखं शेते सुखमायाति याति च। सुखं वक्ति सुखं भोक्ते
व्यवहारेपि शांतधीः॥५९॥ निवृत्तिरपि मूढस्य स्वभावाद्यस्य नैवार्त्तिर्लो
कवद्व्यवहारिणः॥ महाहृद इवाक्षोभ्यो गतक्लेशः सुशोभते॥६०॥ ॥

हारेषु कथं न खेद इत्यत आह। स्वभावादिति। व्यवहारिणोपि यस्य ज्ञानिनः लो
कवत् प्राकृतजनवत्॥ अतिखेदो न जायते कुतः स्वभावात्साक्षात्कृतानं
दस्य स्वभावात्सामर्थ्यादित्यर्थः स गतक्लेशो ज्ञानी महाह्रद इवाक्षोभ्यो नि
र्विकारः सुशोभते ६०

निवृत्तिरिति। लोकदृष्ट्या प्रतीयमानोपि मूढस्य बाह्येंद्रियव्यापाराणां नि-
वृत्तिः प्रवृत्तिस्वरूपेव जायते। अहंकारादीनामपि नि-
वृत्तत्वात् धीरस्य ज्ञानिनः लोकदृष्ट्या प्रारब्धवशात् प्रतीयमानोपि
प्रवृत्तिरपि निवृत्तिफलभागिनी मुक्तपर्य्यवसायिनी स्यादहंकाराभि-

निवृत्तिरपि मूढस्य प्रवृत्तिरूपजायते॥ प्रवृत्तिरपि धीरस्य
निवृत्तिफलभागिनी॥६१॥ परिग्रहेषु वैराग्यं प्रायो मूढस्य
दृश्यते॥ देहे विगलिताशस्य क्व रागः क्व विरागता॥६२॥

ल्यभिमानाभावादित्यर्थः॥६१॥ परिग्रहेष्विति॥ मूढस्य देहाभिमानिनस्त-
त्संबंधितया परिग्रहेषु धवेश्मादिषु प्रायो बाहुल्येन वैराग्यं दृश्यते।
देहे विगलिताशस्य न तत्संबंधिनि पुत्रगृहादौ रागः स्यात् कुत्र च शत्रुव्या-
घ्रादौ विरागः स्यात् देहे रागविरागयोरभावित् तत्संबंधिषु रा-
गविरागयोर्वक्तुमशक्यत्वात्॥६२

भावनेति। मूढस्य दृष्टिः सर्वदा भावना यां वा असक्ता अहं भावनां करो
मि। यद्वा अहमभावनां करोमीत्याहंकारान्ता। स्वस्थस्यात्मनिष्ठस्य तु
सा दृष्टिः भाव्यभावनया दृश्यचिंतया उपलक्षितापि अदृष्टिरूपिणी दृ
श्यदर्शनरहीतरूपैव स्यात् अहं करोमीत्यभिमानाभावादित्यर्थः॥

भावनाभावनासक्ता दृष्टिर्मूढस्य सर्वदा॥ भाव्याभावनया
सा तु स्वस्थस्य दृष्टिरूपिणी॥६३॥ सर्वारंभेषु निष्कामो यश्च
रेद्बालवन्मुनिः। न लेपस्तस्य शुद्धस्य क्रियमाणेपि कर्मणी॥६४

।६३। ननु दृश्यभावने क्रियमाणेपि सा दृष्टिः कथं दृश्यानालंबनीत्याशंक्य
निष्कामत्वादित्याह। सर्वारंभेष्विति। यो बालवन्निष्कामः सन् प्राप्तानवृ
त्तान्सर्वारंभेषु चरति प्रवर्त्तते तस्य शुद्धस्याहंकारमलवर्जितस्य कर्म
णि क्रियमाणे न लेपो न कर्तृता स्याहंकाराभावादित्यर्थः॥६४॥ कृष्ण

एवंविधोतिधन्य इत्याह स एवेति। स आत्मन्य एव धन्यो नान्यः यः सर्व
भावेषु समबुद्धिः तत एव निस्तर्षमानसः वितृष्णचित्तो भवति किं कुर्वन्
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन्॥६५॥ तस्यैव धन्यत्वमुक्तिमा
ह क्वेति। धीरस्य ज्ञानिनः अत एव सर्वदा विकल्परहितस्य संसार प्रपंच

स एव धन्य आत्मज्ञः सर्वभावेषु यः समः॥ पश्यन् शृण्वन् स्पृशन् जि
घ्रन्नश्नन्निस्तर्षमानसः॥६५॥ क्व संसारः क्व चाभासः क्व साध्यं क्व च सा
धनं॥ आकाशस्येव धीरस्य निर्विकल्पस्य सर्वदा॥६६॥ स जयत्यर्थसं
न्यासी पूर्णस्वरसविग्रहः। अकृत्रिमोनवच्छिन्ने समाधिर्यस्य वर्त्तते॥६७॥

क्व अत एव तत्प्रतिभासश्च क्व अत एव साध्यं स्वर्गादिकं क्व। अत एव सा
धनं यागादिकं च क्व॥६६॥ स जयति। स अर्थसंन्यासी दृष्टादृष्टप्रयो
जनसंन्यासी यतः पूर्णस्वरसः पूर्णस्वभावो विग्रहः स्वरूपं यस्य स पूर्णस्वरस
विग्रहो जयति सर्वोत्कर्षेण वर्त्तते सः कः यस्य अकृत्रिमः स्वाभाविकः अन
वच्छिन्ने पूर्णस्वरूपे समाधिर्नवच्छिन्ने समाधिर्यस्य वर्त्तते स जयतीत्यर्थः ६७

ज्ञातत्वेतेस्यतु सर्वत्रनिराकांक्षत्वमेवमुख्यं लक्षणमित्याह। बहूनेति।
अत्रज्ञाननिर्वहनोक्तेन लक्षणेन किंप्रयोजनं ज्ञाततत्त्वो महाशयः भो
गमोक्षयोफलयोर्निराकांक्षी अतएव सर्वदा सर्वत्र भोगमोक्षसाध
नेष्वनीरसः निरनुरागः॥६४॥ महदादि॥ महदहंकारपंचतन्मात्रा

बहूनात्र किमुक्तेन ज्ञाततत्त्वो महाशयः॥ भोगमोक्षनिरा
कांक्षी सर्वदा सर्वनीरसः॥६५॥ महदादि जगद्द्वैतं नाममात्र
विजृंभितं॥ विहाय शुद्धबोधस्य किं कृत्यमवशिष्यते॥६६॥

मं च महाभौतिकं जगल्लक्षणद्वैतं नाममात्रैर्विवृजृंभितं विभिन्नभान्तं
नतु वास्तवं। अतएव तत्र कल्पनी विहाय स्थितस्य अतएव शुद्धबो
धस्य बोधस्य स्वतन्त्रकाशचिन्मात्रस्वरूपस्य किं कृत्यमवशिष्यते।
सर्वदासच्चिदानंदाधिगमेनैव कृतकृत्यत्वादिभावः॥६७॥ राम

न

७१

ननु तथापि अनर्थशांत्यर्थं पत्नः कर्त्तव्य इत्य आह। भ्रमभूतमिति। अ
धिष्ठानसाक्षात्कारे सति इदं सर्वं भ्रमभूतंभ्रमेणेव कल्पितं अत एव
इदं किंचित्किमपि वास्तवं नास्ती निश्चयी अलक्ष्य स्फुरणचिन्मात्र
प्रतिभासवान्। अत एव शुद्धः स्वरूपसाक्षात्कारेण वाधिताध्यस्तमलत्वात

भ्रमभूतमिदं सर्वं किंचिन्नास्तीति निश्चयी॥ अलक्ष्यस्फुरणः शु
द्धः स्वभावेनैव शाम्यति॥ ७०॥ शुद्धस्फुरणरूपस्य दृश्यभाव
मपश्यतः॥ क्व विधिः क्व च वैराग्यं क्व त्यागः क्व शमोपि वा॥ ७१॥

स्वभावेनैव शांतो न तु शांत्यर्थं ज्ञानतिरिक्तमपेक्षमित्यर्थः॥ ७०॥ शुद्धेति॥
शुद्धस्फुरणरूपस्य प्रकाशचिद्रूपस्य अत एव दृश्यभं दृश्यपदार्थमपश्य
तः॥ क्व कुत्र कर्मणि विधिः क्व केषु वा विषयेषु वैराग्यं क्व केषु पदार्थेषु त्या
गः क्व केभ्यः पदार्थेभ्यः शमोपि वा क्वार्थः दृश्यपदार्थस्यैवास्फुरणादित्यर्थः ७१

अ०

स्फुरत इति। चिद्रूपेण प्रकाशमानस्य वंध्यादिकं नास्तीत्यर्थः॥७२॥ बुद्धीति।
बुद्धिरात्मज्ञानमेव पर्यंता नाशो यस्य तस्मिन्संसारे मायामात्रं मायासवलि
तं चैतन्यं विवर्तते आतात्विकं जगदाकारं प्राप्नोति। अतो बुद्धोवि द्वान
तात्विके शरीरे निरहंकारस्तत्संदर्धिनि कलत्रादौ निर्ममः अतएव निष्काम

स्फुरतानंतरूपेण प्रकृतिं च न पश्यतः॥ क्व बंधः क्व च वा मोक्षः क्व हर्षः क्व वि
रागता॥७२॥ बुद्धिपर्यंतसंसारे मायामात्रं विवर्तते॥ निर्ममो निरहंका
रो निष्कामः शोभते बुधः॥७३॥ अक्षयं गतसंतापमात्मानं पश्य
तो मुनेः॥ क्व विद्या क्व च वा विश्वं क्व देहोऽहं ममेति वा॥७४॥ राम

अतएव शोभते दीप्यते कामनानां विवर्तत्वात्॥७३॥ अयक्षमिति। अक्ष
यं अविनाशिनास्तिवं अतएव संतापरहितं अत्मानं पश्यतो मुनेः क्व विद्या
क्व शास्त्राणीत्यर्थः क्व च वा विश्वं क्व च देहः अहं ममेति वा क्व आत्मातिरिक्त
स्य विश्वादे स्फुरणादित्यर्थः॥७४

ता

अज्ञस्य द्वैतानर्थनिवृत्तिरित्युक्तं। अज्ञस्य तु चित्तनिरोधादीन्यपि
कर्मणी कुंजरशौचवैयाणीत्याह। निरोधादीनीति। यदीयदा जडधीः चि
त्तनिरोधादि निजहाति तर्हि अतःक्षणात् अत्मादेव क्षणादारभ्य मनोर
थान्प्रलपाव्लक्षन्न्यासर्वव्यापारान्कर्तुमाप्नोति प्रवर्तते। तथा चा

निरोधादीनि कर्माणी जहाति जडधीर्यदि॥ मनोरथान्प्रलापां
श्च कर्त्तुमाप्नोहितःक्षणात्॥७५॥ मंदश्श्रुत्वापि तद्वस्तु न जहा
ति विमूढतां॥ निर्विकल्पो वहिर्यत्नादंतर्विषयलालसः॥७६॥

मूढस्य चित्तनिरोधादिकमकिंचित्करमित्यर्थः॥७५॥ मूढस्यात्मश्रवण
मप्यनर्थकमित्याह। मंद इति। मंदो मूर्खस्तत अत्मवस्तु श्रुत्वापि मूढतां
न जहाति। मलिनचित्तस्याश्रवणादपि ज्ञानानुदयात्। अतएव मूढः य
त्नाद्वहिर्दृष्ट्या निर्विकल्पोपि अंतर्मनसि विषयलोलुपो भवतीत्यर्थः ७६

ज्ञानी तु लौकष्ट्या कर्म कुर्वाणोप्यकर्त्तेवेत्याह। ज्ञानादिति। यः ज्ञानाद्गलि
तक्रियाध्यासः स लोकदृष्ट्या कर्मकृदपि किंचन कर्त्तुं वक्तुमेव अवस
रं नाप्नोति। अहं करिष्यामीति वक्तुमपि अवसरं नाप्नोति कर्मावसरस्तु
दूरापास्त इति भावः॥७७॥ विद्वांस्तु तमःप्रकाशादिकं न पश्यतीत्या

ज्ञानाद्गलितकर्मा यो लोकदृष्ट्यापि कर्मकृत्॥ नाप्नोत्यवसरं
कर्त्तुं वक्तुमेव न किंचन॥७७॥ क्व तमः क्व प्रकाशो वा हानं क्व च
न किंचन॥ निर्विकारस्य धीरस्य निरातंकस्य सर्वदा॥७८॥

हाक्वेति। धीरस्य ज्ञानिनः अत एव निर्विकारस्य निरस्तमोहादिविकारस्य
तमः क्व तमस्तोभावे च न निरूप्य प्रकाशो वा क्व। निरातंकस्य कालादिभय
शून्यस्य हानं क्वचन कुत्रेत्यर्थः। अनुरागादिशून्यत्वात् किंचन किमपि अ
दानादि कर्मापि क्वचन कुत्रापि इत्यर्थः॥७८॥ रामनारायणं कृष्णदामोदरं

ज्ञानित्वानिर्वाच्यस्वभाव इत्याह॥ क्व धैर्यमिति। योगिनः अत एव निःस्वभाव
स्य अत एव निर्वाच्यस्वभावस्य धैर्यं क्व विवेकित्वं च निरातंकता निर्भय
तापि क्वेत्यर्थः॥७९॥ ज्ञानदृष्ट्या तु स्वर्गनरकमोक्षादि किंचिदपि नास्तीत्या
ह स्वर्ग इति सुगमः श्लोकः॥८०॥ ज्ञानिनश्चित्तं तु प्रार्थनानुतापादिविका

क्व धैर्यं क्व विवेकित्वं क्व नितंकतापि वा॥ अनिर्वाच्यस्वभावस्य निःस्व
भावस्य योगीनः॥७९॥ न स्वर्गो नैव नरको जीवन्मुक्तिर्न चैव हि॥ बहु
नात्र विमुक्तेन योगदृष्ट्या न किंचन॥८०॥ नैव प्रार्थयते लाभं ना
लाभेनानुशोचति॥ धीरस्य शीतलं चित्तममृतेनैव पूरितं॥८१॥॥

ररहितत्वादमृते नैव परमानंदे नैव पूरितमित्याह। नैवेति। लाभं न प्रार्थ
यते। अलाभेन सुवर्णादिलाभेन नानुशोचति। अत एव धीरस्य चित्तं अ
मृतेनैव पूरितं सत् शीतलं अध्यात्मिकादितापरहितमित्यर्थः॥८१॥०॥

उक्तप्रायमेवार्थं पुनःपुनर्भंगीविशेषेण वर्णयति ज्ञानदशायाः सर्वोत्कृष्ट
त्वख्यापनायान शांतमिति। निष्कामो विद्याकामकर्महीनो ज्ञानी शांत्यादि
सत्वगुणयुक्तं न स्तौति। नापि दुष्टं निंदति तृप्तः सन् समदुःखसुखो भवति निः
ष्कामत्वात् किंचित्कृत्यं न पश्यति॥८२॥ धीर इति। धीरो ज्ञानी संसारं द्वेष्टि सं

न शांतं स्तौति निष्कामो न दुष्टमपि निंदति॥ समदुःखसुखस्तृप्तः किंचित्कृ
त्यं न पश्यति॥८२॥ धीरो न द्वेष्टि संसारमात्मानं न दिदृक्षति॥ हर्षा
मर्षविनिर्मुक्तो न मृतो न च जीवति॥८३॥ निःस्नेहः पुत्रदारादौ निष्का
मो विषयेषु च॥ निश्चिंतः स्वशरीरेपि निराशः शोभते बुधः॥८४॥

सारादर्शित्वाद्बाधितानुसंधानाद्वा। तथा आत्मानं न दिदृक्षति अवाप्त
साक्षात्कारत्वात्। अतएव हर्षामर्षविनिर्मुक्तस्य तथा जीवनमरणादिर
हितः सदैकरूपत्वादित्यर्थः॥८३॥ निःस्नेह इति निराशो बुधः। शोभते दी
प्यते कीदृशः। पुत्रदारादौ निःस्नेहः प्रीतिरहितः विषयेषु निष्कामः भो
गेच्छारहितः। स्वशरीरेपि भोजनादिचिंतारहितः॥८४॥ रामनजराम

सुख

तुष्टिरिति। धीरस्य ज्ञानीनः यथापतितेन यथाप्राप्तेन वर्त्तते तिष्ठति तस्य य
थापतिवर्त्तिनः सर्वत्र प्रारब्धप्राप्ते सद्वस्तुन्यसद्वस्तुनि च तुष्टिरात्मतो
षः। व तथा स्वछंदं अनपेक्षितं प्रारब्धवशात् नानादेशान् विचरतः यत्र
वने वा नगरे वा सूर्यास्तमितस्तत्रैव शायिनः शयनं कुर्वतः॥८५॥ यतत्वि

तुष्टिः सर्वत्र धीरस्य यथापततिवर्त्तिनः॥ स्व
छंदो चरतो देशान्यत्रस्तमितशायिनः॥८५
पततूदेतु वा देहो नास्य चिंता महात्मनः॥ स्व
भावभूमिविश्रांतिविस्मृताशेषसंसृतेः॥८६

ति। देहः पततु म्रियतां वा अथ उदेतु जीवतु वा उभयथापि अस्य ज्ञानिनः चिं
ता न भवति। कीदृशस्य स्वभावो नाम निजात्मस्वरूपं स एव भूमिस्तत्र वि
श्रांत्या विस्मृतसमस्तसंसारस्य॥८६॥ राम भज कृष्ण भज वार वारं॥

अकिंचिन इति। केवलो निर्विकारो बुधो रमते। कीदृशः अकिंचनः नास्ति
किंचनः नास्ति किंचन परिगृहीतं यस्य सः अकिंचनः अतएव कामचारः वि
धिनिषेधाकिंकरः स्वच्छंदचारि अतएव निर्द्वंद्वः सुखदुःखादिशून्यः छि
न्नसंशयः

अकिंचनः कामचारी निर्द्वंद्वः छिन्नसंशयः॥ असक्तः सर्वभा
वेषु केवलो रमते बुधः॥८७॥ निर्ममः शोभते धीरः समलोष्टा
श्मकांचनः॥ सुभिन्नहृदयग्रंथिर्विनिर्द्धूतरजस्तमः॥८८॥

द्वैतसंशयशून्यः सर्वेषु भावेषु असक्तः असंगशून्यः॥८७॥ निर्ममइति। धी
रो ज्ञानी शोभते यतो निर्मम अतएव समलोष्टाश्मकांचनः ज्ञानवलोके
ने नसुभिन्नो हृदयग्रंथिरहंकारो यस्य सः। तथा निर्द्धूते रजस्तमसी यस्य सः॥८८

सर्वत्रेति। सर्वत्र सर्वेषां विषयेषु अनवधानस्य एकाग्रत्वरहितस्य
तथा न किंचीद्भाविनः हृदि मुक्तात्मनः कर्तृत्वाद्यध्यासरहितात्मनः अत
एवात्मानंदेन विशेषतस्तृप्तस्य केन तुलना जायते ज्ञानिव्यतिरिक्तस्य
ईदृशस्याभावादित्यर्थः।८९॥ अतुलनामेव विदृशायति। जानन्निति

सर्वत्रानवधानस्य न किंचिद्भाविनो हृदि॥ मुक्तात्मनो वितृप्त
स्य तुलना केन जायते॥८९॥ जानन्नपि न जानाति पश्यन्न
पि न पश्यति॥ ब्रुवन्नपि न च ब्रूते कोन्यो निर्वासनादृते॥९०

निर्वासनात् ज्ञानिनः ऋते अन्यः को लोके दृष्टा मनसा जानन्नपि व
स्तुतो न जानाति। तथा च चक्षुषा पश्यन्नपि वस्तुतो न पश्यति ब्रुवन्न
पि च न ब्रूते कर्तृत्वादिभिमानाभावादित्यर्थः॥९०॥ श्रीकृष्ण गोविंद॥

भिक्षुरिति। यस्य ज्ञानिनः उत्कृष्टेषु भावेषु शोभना अपकृष्टेषु शोभ
नत्वावगाहिनी मतिर्गलिता अत एव यो निष्कामः स भूपतिर्वाजनका
दिवत् भिक्षुर्वा याज्ञवल्क्यादिवत् शोभत एव भावेषु निर्विकल्पाज्ञा
ज्यं तस्य न बंधाय स्यथेः॥११॥ कृति। योगिनः निर्व्याजमकपटं यदार्जवं

भिक्षुर्वा भूपतिर्वापि यो निष्कामः स शोभते॥ भावेषु गलिता
यस्य शोभनाशोभना मतिः॥११॥ कृतस्वाछंदं कृतसंकोचः कृतवा
तत्वविनिश्चयः॥ निर्व्याजार्जवभूतस्य चरितार्थस्य योगिनः १२

ऋजुबुद्धिस्तद्रूपस्य अत्मनिष्ठत्वाच्चरितार्थस्य यथार्थनाम्नः स्वाछं
द्यं स्वेछया चारित्वं कृत तथा संकोचः प्रकृत्यादिसंवरणं कृत तत्वनिश्चयः
कृ कर्तत्वं कृ कर्त्तत्वाध्यासाभावात् अत एव निर्व्याजं यदार्जवं वक्र बु
द्ध्यभावस्तद्रूपस्य। १२।

७६

अत्मेति। आत्मनि विश्रांतस्य स्थित्यात्तेन अतएव आशारहितेन अतएव
गतार्तिना गतदुःखेन ज्ञानिना यदंतःकरणे नुभूयते तत्कथं कं प्रका
रं धर्ममाश्रित्य कथ्यते प्रकारस्यैव धर्मस्याभावात् कस्य वा अपि
कारिणः कथ्यते तादृशाधिकारिणो भावात्॥९३॥ सुप्तमिति। धीरः सुषु

आत्मविश्रांतित्वेन निराशेन गतार्तिना॥ अंतर्यदनुभूयते तत्क
थं कस्य कथ्यते॥९३॥ सुप्तोपि न सुषुप्तौ च स्वप्नेपि शयितो न च॥
जागरेपि न जागर्ति धीरः तृप्तः पदे पदे॥९४॥ ज्ञः सचित्तोपि निश्चि
त्तः सेंद्रियोपि निरिंद्रियः सबुद्धिरपि निर्बुद्धिः साहंकारो नहंकृति ९५

प्तो न सुप्तः स्वप्नेपि शयितो न जागरेपि न जागर्ति अवस्थातीतो बुद्धिस्त
द्विक्तात्मत्वात् इदमेवाभिप्रेत्याह। पदेपदे क्षणेक्षणे अविरतं नि
त्यानंदानुभवतृप्तः ९४ ज्ञ इति। ज्ञो ज्ञानी लोकदृष्ट्या चित्तादिसहितोपि च

नसुखीति।लोकगत्यासुखीत्यादीरूपोपिवस्तुतस्तद्रहितः।अंतःकरणा
ध्यासरहितत्वात्‌नाविरक्तो।विषयद्वेषाभावात्‌नवामुक्तः।पूर्वमपिब
धानाभावात्‌तथाअकिंचनः।सदेकरूपत्वात्‌तथाकिंचनकिंचदपिच
न।अनिर्वाच्यत्वात्‌॥१६॥विक्षेपेपीति।धन्योज्ञानीलोकदृष्ट्याविक्षे
नसुखीनचवादुःखीनविरक्तोनरागवान्‌॥नमुमुक्षुर्नवामुक्तो
नकिंचिन्नापिकिंचनः॥१६॥विक्षेपेपिनविक्षिप्तः।समाधौनस
माधिमान्‌॥जाड्येपिनजडोधन्यः।पंडित्येपिनपंडितः॥१७
पेपिवस्तुतो।नविक्षिप्तः।स्वप्रकाशात्मानुभवात्‌॥लोकदृष्ट्यासमाधौ
प्रतीयमानेपिनसमाधिमान्‌।समाधिःकर्तृत्वाध्यासाभावात्‌।लोक
दृष्ट्याजाड्येप्रतीयमानेपीनजडः।स्वनुभवशालित्वात्‌।लोकेदृष्ट्या
पांडित्येप्रतीयमानेनपंडितः।पंडितोहमितिअभिमानाभावात्‌॥१७॥

मुक्तमिति। मुक्तः आरब्धवज्ज्ञाता। यथाप्राप्तस्थितौ सत्यामपि स्व[illegible]चित्तः
तथाकृते पूर्वकृते कर्त्तव्ये च करिष्यमाणकर्मणि संतुष्टः। अभिनिवेशो
द्वेगशून्यः। अतएव सर्वत्रसमः चेतः स्यात् इदमकृतं इदं च कृतं इति न

मुक्तो यथास्थितः स्वस्थः कृतकर्त्तव्यनिर्वृतिः॥ समः सर्वत्र वैत
ष्ण्यान्न स्मरत्यकृतं कृतं॥ ९८॥ न प्रीयते वंद्यमानो निंद्यमानो
न कुप्यति॥ नैवोद्विजति मरणे जीवने नाभिनंदति॥ ९९॥ रामजी

स्मरति॥ ९८॥ न प्रीयत इति। कैश्चित् स्वस्मिन् वंद्यमानो न तुष्यति मरणे
उपस्थिते सइति उद्वेगं न प्राप्नोति आत्मनो नित्यत्वानुसंधानात्॥ अत
एव जीवने सति नाभिनंदति॥ ९९॥ श्रीरामजयरामजयजयराम॥ ॥

नधावतीति। उपशांतः धीः पुरुषः जानकीर्णप्रदेशं नानुधावति नाप्यरण्यं सर्वत्र शांतत्वात्। यथा तथा संमर्द्दे न तदसंमर्द्दप्रकारेण वा यत्र तत्र वनेवा

नधावति जनाकीर्णं नारण्यमुप
शांतधीः॥ यथातथा यत्र तत्र समए
वावतिष्ठते॥१००॥ इतिशामशतकं

पत्तने वा समएव स्वस्थचित्तएवावतिष्ठते आत्मसाक्षात्कारत्वात्॥ इतिश्रीम
द्विश्वेश्वरविरचितायां ऽष्टावक्रटीकायां शांतिप्रकरणं समाप्तं॥ श्रीरामजए०

साध्यसाधनरूपेण ज्ञाते ज्ञाने गुरोर्मुखात्॥ शिष्यः स्वात्मनि विश्रांति मष्टभिः श्रा
ह सस्फुटं॥१॥ एवं तत्वज्ञानिनः स्वभावमृताशांतिं श्रुत्वा स्वकृतार्थेतया गुरूंप
तोषयितु मात्मविश्रांत्यष्टकं शिष्यः स्वयमाह। तत्वेति। हे गुरो मया भवतः

तत्वविज्ञानसंदेशमादाय हृदयोदरात्॥ ना
नाविधपरामर्शशल्योद्धारः कृतो मया॥१

सकाशात् तत्वविज्ञानोपदेशमादाय स्वहृदयोदरात् नानाविधपरामर्श एव
यच्छल्यं तस्य उद्धारः अपहारः कृतः॥१॥ श्रीरामजयरामजयजयरामऽ

अ० तदेव स्पष्टयति। क्व धर्म इति। धर्मार्थकामा अपि हृदयोदरात्। निरस्ताः क्षयि ष्णुत्वादित्यर्थः। स्वमहिम्नि स्थितस्य मे मम विवेकिता क्व द्वैतं क्व चिन्मात्रवि श्रांतं तस्य विवेकानुपयोगात्। उत्तीर्णेतु परपारे नौकया किं प्रयोजन मिति न्यायात्। द्वैतस्य च ज्ञानबाधितत्वात्। अद्वैतस्य द्वैतसापेक्षत्वेन

क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकता॥ क्व द्वैतं क्व च वाद्वैतं स्वमहिम्नि स्थितस्य मे॥१॥ क्व भूतं क्व भविष्यद्वा वर्त्तमानम पि क्व वा॥ क्व देशः क्व च वा नित्यं स्वमहिम्नि स्थितस्य मे॥२॥

स्वाभाविकत्वात् विवेकाद्यो पि मम न संतीत्यर्थः॥१॥ क्व द्वैतमित्युक्तमेव विशे षतः प्रपंचयति। क्व भूतमिति कालस्यापि मम अस्फूर्तेस्तदुपाधिका भूतभविष्यद्व र्त्तमाना अपि न संतीत्यर्थः। नित्यं स्वमहिम्नि स्थितस्य मम देशो पि नास्तीत्यर्थः २ ७९

क्वचेति। अत्ति व्याप्नोति आत्मा स च व्याप्यमपेक्षकथ्यते स्वमहिम्नि स्थि
तस्य च मम आत्मादिकं नास्ति।४। क्वस्व प्र इति। स्वप्नादयो बुद्धेरेवावस्था
स्ता मम न संति। एतत्रितयाभावे तन्निरूप तुरीयावस्थापि मम नास्ति

क्व चात्मा क्व च वानात्मा क्व शुभं क्वाशुभं तथा। क्व चिंता क्व च वा
चिंता स्वमहिम्नि स्थितस्य मे॥४॥ क्व स्वप्नः क्व सुषुप्तिर्वा क्व
च जागरणं तथा॥ क्व तुरीयं भयं वापि स्वमहिम्नि स्थित
स्य मे॥५॥ क्व दूरं क्व समीपं वा बाह्यं क्वाभ्यंतरं क्व वा॥ क्व
स्थूलं क्व च वा सूक्ष्मं स्वमहिम्नि स्थितस्य मे।।६॥ राम

।तथा भयादयोप्यंतःकरणधर्मा मम न संतीत्यर्थः॥५॥ क्व दूरमिति। स
र्वरूपपरिपूर्णस्य मम दूरसमीपादिकं नास्ति। पूर्णदर्शिनो मे मम स्थू
ल सूक्ष्म दृष्टिरपि नास्तीत्यर्थः॥६॥ श्रीराम जय राम जय जय राम॥

क्वमृत्युरिति।कालत्रयेसद्रूपस्यममजीवितमरणेनस्तः पूर्णमात्रदर्शिनोमे
ममलोकाभ्रादयोनसंति लौकिकंकार्यमपिनास्ति।पूर्णस्यममलक्ष्येल
यःक्वसमाधिश्चक्व॥७॥अलमिति।धर्मार्थकामकथया।विज्ञानकथया

क्वमृत्युर्जीवितंवाक्वक्वलोकाक्वस्यलौकिकं॥क्वलयःक्व
समाधिर्वास्वमहिम्निस्थितस्यमे॥७॥अलंत्रिवर्गकथया
योगस्यकथयाप्यलं॥अलंविज्ञानकथया।विश्रांतस्यममा
त्मनि॥८॥इत्यात्मविश्रांत्याष्टकं॥क्वभूतानिक्वदेहोवाक्वेंद्रिया
णिक्ववामनः॥क्वशून्यंक्वचनैराश्यंमत्स्वरूपनिरंजने१

चालं।आत्मविश्रांतस्यममएतैःप्रयोजनाभावादित्यर्थः॥८॥इत्यात्म
विश्रांतस्याष्टकं॥आत्मविश्रांत्यभिव्यक्तांस्वभावमुक्तिशालिनो॥जी
वन्मुक्तिदशांशिष्यश्चतुर्दशभिरब्रवीत्१

आगुक्तात्मविश्रांतेः फलीभूतां विदुषः स्वभावभूतां जीवन्मुक्तिदशां शि
ष्यश्चतुर्दशश्लोकैर्निरूपयति। क्वभूतेति। निरंजने सर्वोपाधिशून्ये मत्स्व
रूपभूत देहेंद्रियमन्नास्ति क्व। तर्हि क्व शून्यमस्ति नेत्याह। क्व शून्यमिति
नहि सदात्मनि सति शून्यं संभवतीत्यर्थः। मयि नैराश्यमपि स्वाभावि

कशास्त्रं क्वात्मविज्ञानं क्व वा निर्विषयं मनः॥ क्व तृप्तिः क्व वि
तृष्णत्वं क्व गतद्वंद्वमे सदा॥१॥ क्व विद्या क्व च वाविद्या क्वाहं
क्वेदं मम क्व वा॥ क्व बंधः क्व च वा मोक्षः स्वरूपस्य क्व रूपिता॥२

कं ना। आज्ञानि रूपत्वादित्यर्थः। शक्वेति। सदा गतद्वंद्वस्य मे मम शास्त्रं क्व। त
ज्जन्यविज्ञानं क्व। आत्मविश्रांत्या सर्वस्य गलितप्रायत्वात्। निर्विषयं मनो
पि न तस्यापि गलितप्रायत्वात्। अत एव तृप्तिरपि न तथा तृप्तिसाध्यं वि
तृष्णत्वमपि न चित्तस्यैव गलितप्रायत्वादित्यर्थः॥३॥ ॥ ॥ ॥

क्वविद्येति। मयि क्व विद्याद्याहंकारधर्माः इदं वस्तुजातं क्व। मम संबंधः क्व
द्वितीयस्य संबंधिनोभावात्। तथा बंधमोक्षावपि धर्मौ क्व। अत्र हेतुमाह। स्वरू
पस्येति। निर्विशेषस्वरूपस्य मम रूपिता धर्मवता क्व। तथा च निर्धर्मके मयि
न विद्यादयो धर्माः संतीति फलितार्थः॥ क्व प्रारब्धेति। प्रारब्धानि कर्माणि
तथा जीवन्मुक्तिस्तथा विदेहकैवल्यं मे ते धर्मा सदा निर्विशेषस्य मे न संती

क्व प्रारब्धानि कर्माणि जीवन्मुक्तिरपि क्व वा॥ क्व तद्विदेहकैवल्यं
निर्विशेषस्य सर्वदा॥४॥ क्व कर्ता क्व च वा भोक्ता निष्क्रियं स्फुरणं क्व वा॥
क्वापरोक्षं फलं वा क्व निःस्वभावस्य मे सदा॥ क्व लोकः क्व मुमुक्षुर्वा
क्व योगी ज्ञानवान्क्व वा॥ क्व बद्धः क्व च वा मुक्तः स्वस्वरूपेहमद्वये॥६॥०॥

त्यर्थः।४। क्व कर्त्तेति। सदा निःस्वभावस्य मे कर्तृत्वभोक्तृत्वनिःक्रियस्फुरणा
नि क्व। फलं विषयावछिन्नं यत्फलं चैतन्यं तत् क्वेत्यर्थः।५। क्व लोक इति॥ अहमि
त्येवंरूपे द्वये आत्माद्वैतं स्वस्वरूपे सति लोकः मुमुक्षुः क्व योगी क्व ज्ञानवा
न् बद्धः क्व मुक्तश्च क्वेत्यर्थः॥६

क्व सृष्टिरिति। अहमये आत्मा द्वैते स्वस्वरूपे सति सृष्टिसंहारौ साध्यसा
धनै साधकसिद्धि क्व वा॥७॥ क्व प्रमातेति। सर्वदा विमलस्योपाधिसंबंध
मलशून्यस्य मे प्रमातृप्रमाणप्रमेयप्रमासंबंधः। क्व मम किंचित्सामा
न्यतोऽन्यत्पदार्थमात्रं क्व न किंचिद्वा क्व पदार्थाभावोपि मम क्व सर्व
क्व सृष्टिः क्व च संहारः क्व साध्यं क्व च साधनं। क्व साधकः क्व सिद्धिर्वा स्वस्व
रूपे हमद्वये।७। क्व प्रमाता प्रमाणं वा क्व मेयं क्व च प्रमा क्व किंचि[illegible] क्व न किं
चिद्वा सर्वदा विमलस्य मे।८। क्व विक्षेपः क्व चैकाग्र्यं क्व निर्बोधः क्व मूढता। क्व हर्षः क्व
विषादो वा सर्वदा निष्क्रियस्य मे।९। क्व चैष व्यवहारो वा क्व च सा परमार्थता॥
था संबंधशून्यत्वादित्यर्थः।८। क्वेति। विक्षेप इति सर्वदा निष्क्रियस्य मे विक्षे
पादिका क्रिया क्वेत्यर्थः॥९॥ क्व चैष इति। सदा निर्विमर्षस्य विशेषज्ञान
वृत्तिशून्यस्य व्यवहारः॥ व्यवहारिक पदार्थज्ञानं क्व परमार्थता ज्ञा

नेच क्क। सुखदुःखादिकमपि क्क १० क्क मायेति। सर्वदा विमलस्य उपाधि मल शून्य
स्य मम माया संसारो प्रीति र्विरति श्च वैराग्यं क्क। जीवभावो ब्रह्मभावश्च क्क। कार्यो
पाध्यभावे जीवत्वस्य मुक्त मशक्यत्वा द्याप्य वस्तुनामभावे ब्रह्मत्वस्य च वक्तु
मशक्यत्वादित्यर्थः॥११॥ क्केति। कूटस्थ निष्क्रियस्य तथा निर्विभागस्य मे द्वराहित
क्क सुखं क्क च वा दुःखं निर्विमर्षस्य मे सदा॥१०॥ क्क माया क्क च संसारः क्क प्रीति
र्विरतिः क्क वा॥ क्क जीवः क्क च तद्ब्रह्म सर्वदा विमलस्य मे॥११॥ क्क प्रवृत्ति र्निवृत्ति र्वा क्क
शिष्य क्क च वा गुरुः॥ क्क वास्ति पुरुषार्थो वा निरुपाधेः शिवस्य मे॥१२॥ युक्तिः क्क च
बंधनं॥ कूटस्थ निर्विभागस्य स्वस्थस्य मम सर्वदा॥१२॥ क्कोपदेशः क्क च शास्त्रं क्क
स्य सर्वस्वस्थस्य मम प्रवृत्ति निवृत्ति क्क॥१२॥ क्कोपदेश इति। निरुपाधे निरुपाधि शू
न्यस्य तथा शिवस्य नित्यानंदरूपस्य उपदेशानक्रिया क्क। उपदेशकं शा
स्त्रं च क्क माया क्क बाध्यभावेन क्क तोपदेशास्य शास्त्रस्य चाभावात्। अत
एव च शिष्यः गुरुश्च क्क स्वयं शिवस्वरूपस्य च पुरुषार्थो वा क्क चास्ति॥१३॥

८

जीवन्मुक्तिदशामुपसंहरति। क्व वास्तीति। ममास्तीति वस्तु स्फुरति। असत्वा
पेक्षत्वात्सत्वस्य। तथा नास्तीत्यपि न स्फुरति। सत्वापेक्षत्वान्नास्तित्वस्य
अत एव मिथः सापेक्षत्वादेकत्वद्वित्वेपि मम मस्तः। प्रत्येकं व्यक्तिभेदे

क्व चास्ति क्व च नास्ति क्वास्ति चैकं क्व च द्वयं। बहुनात्र किमुक्तेन न
किंचिन्नोत्तिष्ठते मम॥१८॥ इति शिष्यप्रोक्तं जीवन्मुक्तचतुर्दशकं॥१८

न निषेधस्य कल्पकोटिभिरपि वक्तुमशक्यत्वात्सामान्यत आह। बहुनाउ
क्तेन किं प्रयोजनं मम चिदेकरूपस्य किंचिदपि नोत्तिष्ठते न प्रकाशत इत्य
र्थः॥१८॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्यप्रोक्तं जीवन्मु
क्तिचतुर्दशकं॥

३०

विनेयबुद्धिसौकार्यमद्दिश्य ग्रंथकृत्स्वयं श्लोकसंख्यां पुरस्कृत्य प्राहानुक्र
मणीस्फुटं १ दशेति दशषट्षोडश श्लोकाः गुरूरूपदेशे स्युः संति प्रथमप्र
करणे। पंचविंशति श्लोकाः शिष्यात्मानुभवोल्लासाख्ये द्वितीये स्युः। चतुर्दश
श्लोकाः पुनर्गुरूणां पक्षे मुद्रयात्मोपदेशाख्ये तृतीयप्रकरणे स्युः १

दशषट्स्वोपदेशे स्युः श्लोकाश्च पंचविंशतिः॥ सत्यात्मानुभवो
ल्लासे उपदेशे चतुर्दश॥ १॥ षडुल्लासे लये चैवं उपदेशाश्च
तुश्चतुः॥ पंचकं स्यादनुभवं बंधमोक्षे चतुष्टकं॥ २॥ ॥ ॥

षडुल्लास इति। षट् श्लोकाः शिष्यात्मानुभवोल्लासे चतुर्थप्रकरणे स्युः चत्वा
रः श्लोकाः गुरुप्रोक्तलयाख्ये पंचमप्रकरणे स्युः। पुनश्चत्वारः श्लोकाः गुरुप्रो
क्ते प्रतिवादिसिद्धनिषेधोपदेशाख्ये षष्ठेप्रकरणे स्युः। श्लोकानां पंचकं शि
ष्यप्रोक्तेनुभावाख्ये सप्तमेप्रकरणे स्युः श्लोकानां चतुष्कं गुरुप्रोक्ते बंधमो
क्षाष्टमेप्रकरणे स्युः॥ २॥

अ॰

निर्वेदोपशम इति। श्लोकाष्टकं गुरुप्रोक्ते निर्वेदाख्ये नवमे प्रकरणे स्यात्
गुरुप्रोक्तमुपशमाष्टकं नाम दशमप्रकरणं गुरुप्रोक्तज्ञानाष्टकं नाम एकादश

निर्वेदोपशमे ज्ञानमेवमे
वाष्टकं भवेत्॥ यथासुखं सप्तकं    ख
च शांतौ स्याद्द्द संमति४॥३

प्रकरणं॥ शिष्यप्रोक्तमेवाष्टकं नाम द्वादशप्रकरणं॥ शिष्यप्रोक्तं यो ये यथासुखस
प्तकं नाम त्रयोदशप्रकरणं॥ शिष्यप्रोक्तशांतिचतुष्कं नाम चतुर्दशप्रकरणं॥

